## किं भवन्तः जानन्ति यत् भारते पञ्चाशत्सहस्राधिकाः (५०,०००) व्रीहिभेदाः सन्ति इति ?

एताद्दशविवरणार्थम् अन्यविवरणार्थं च पठ्यताम्

# वसुधा

षोडशपुटात्मिका जीववैविध्यसम्बद्धा विशेषसञ्चिका दास्यते

जून्( २००२ )मासस्य सञ्चिकया सह

क्रीडाः विश्ववैविध्यानि रसप्रश्नाः विविधक्रियाः कथाः

Sponsored by




जूनपञ्चमदिनाङ्कस्य विश्वपरिसरदिनं निमित्तीकृत्य

जीववैविध्यमैत्रीपूर्णं जीवनं याप्यताम् ।

A 
ACTIVE

B 
BUZZ BOSS

C 
CADET DX

D 
DEVIL DX

E 
ELEPHANT

F 
FISH

G 
GIRAFFE

H 
HEN

I 
INSECT

J 
JOKER

K 
KIDD DX

L 
LI'L ANGEL
LAMBADA LIMBO

M 
MISSILE MISS INDIA Jr

N 
NEST

O 
ORANGE

P 
PIRANHA

Q 
QUEEN Jr

R 
ROBO COP

S 
SPARKY SALSA

T 
TERMINATOR




V W

The largest range of kids bikes
HERO CYCLES
THE ABC OF CYCLING

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ मे - २००२ सञ्चिका - ०२



पुराणकथावली

२५



माता एव दैवतम्
(वेतालकथा)
१९



मायासरोवरम्

११



विघ्नेश्वरः

४५



## अन्तरङ्गम्


★ राक्षसस्य पुण्यं कार्यम् ...७
★ मायासरोवरम्-२...११ ★ संन्यासस्वीकारस्य अर्हता ...१८
★ माता एव दैवतम् ...१९ ★ तपोबलं श्रेष्ठं मान्त्रिकबलादपि...२५
★ भारतम् अवगम्यताम् - प्रश्नोत्तरम् ...२८ ★ उपकारबुद्धिः ...२९
★ बुद्धिमान् तेनालीरामः ...३२ ★ ग्रीष्मकालः शीतलता च...३४
★ भारतदर्शनम् ...३७ ★ बिहारीया जानपदकथा ...३८
★ वार्ताविशेषः ...४४ ★ विघ्नेश्वरः-५...४५
★ परिश्रमस्य फलं सर्वदा मधुरम् ...५१
★ भजरङ्गस्य पौरुषम् ...५५
★ मम पिता अत्र नास्ति ...५८
★ अजेयः गरुडः-१३ ...६१
★ चित्रशीर्षिकास्पर्धा ...६६



**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandamama India Ltd.***
**to**
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिक (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/2661946/2653057



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# शान्तिः चिरायुः भूयात्

हिन्दुत्वस्य जन्मभूमिः भारतम् । हिन्दुत्वं नाम काचन जीवनपद्धतिः । अत्र सन्ति विविधमतानि - जैनमतं, बौद्धमतं, सिक्खमतम् इत्यादीनि । प्रायः प्रथमे शतके क्रैस्तमतं भारते पदम् अस्थापयत्, अत्रैव प्रवृद्धिम् अगात् च । इस्लांमतं प्रायः पञ्चमे शतके अत्र प्रवेशम् अकरोत् । वणिक्त्वेन, प्रवासित्वेन, आक्रामकत्वेन वा तत्तन्मतीयाः अत्र आगताः । मुस्लिमाः प्रायः पञ्चाधिकशतकानि यावत् अत्र शासनं कृतवन्तः । श्रेष्ठ-शासकस्य अकबरस्य काले *दिन् इलाही* (दैवत्वे विश्वासः) इत्येतत् तत्त्वं व्यवहारपथम् आगतम् । 'स्वश्रद्धानुगुणं मतस्य अनुसरणं कर्तुं सर्वेऽपि अधिकारम् अर्हन्ति' इति तस्य तात्पर्यम् । एतस्मिन् एव काले सिक्खमतस्य जन्म जातम् ।

भारतस्य जनाः अखण्डभावेन स्वातन्त्र्यसङ्ग्रामे भागम् ऊढवन्तः । किन्तु दौर्भाग्यवशात् स्वातन्त्र्यप्राप्तितः पूर्वम् एव मताधारेण देशस्य विभागः जातः । ततः भारतपाकिस्थानयोः युद्धानि अभवन्, किन्तु तानि सीमाविवादविषयान् अवलम्ब्य । अस्माकं नायकाः परस्परभ्रातृभावं वदन्तः देशस्य मतनिरपेक्षतां प्रतिपादितवन्तः सांविधानिकतया । तथापि स्वातन्त्र्यप्राप्तेः ५५ वर्षाणाम् अनन्तरम् अपि मतीयसङ्घर्षाः न्यूनाः न जाताः । एतेषु दिनेषु प्रवृत्ता गुजरातघटना एतस्य एकम् उदाहरणम् । दोषः कस्य इति तु अत्र न मुख्यम् । अत्र बहवः निरपराधिनः प्राणैः वियुक्ताः जाताः यत्, तत् अस्मान् लज्जायुतान् अवनत-शिरस्कान् च करोति । एवं स्थिते अपि वयम् अहिंसातत्त्वस्य परमाराधकस्य महात्मगान्धिवर्यस्य अनुयायिनं निर्दिशामः आत्मानम् ! अहो, विसङ्गतिः !!

चन्दमामा शान्तेः सौहार्दभावस्य च वर्धने प्रयत्नरता भवति सदापि । वयम् आशास्महे यत् अपराधाः अपसृताः भवन्तु, वैरं शाम्यतु, शान्तिः अभिवर्धतां च इति ।

---

सम्पादकः - विश्वम्

Visit us at : http://www.chandamama.org

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-८

भारतीयः इतिहासः बहूनां नायकानां चरित्रेण पूर्णः । तेषु कति जनान् अभिज्ञातुं शक्नुयुः भवन्तः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1 अहं ६०६ तमे क्रिस्ताब्दे, मम षोडशे वर्षे थानेश्वरस्य अधिपतिः जातः । ततः आरभ्य अहं जनहितार्थं बहुधा प्रयत्नम् अकरवम् । अहं कः ? ..........................................

2 अहं विजयनगरसाम्राज्यस्य शासकत्वेन प्रसिद्धः । मया १५०९ क्रिस्ताब्दतः १५२९ क्रिस्ताब्दान्तं यावत् शासनं कृतम् । अहं कः ? ..........................................

3 अहं मराठासाम्राज्यस्य अधिपतित्वेन आत्मानं स्वयं घोषितवान् । रायगढे 'छत्रपतिः' इति बिरुदः दत्तः मह्यम् । अहं कः इति ज्ञातुम् इतोऽप्यधिकं विवरणं नावश्यकं खलु ? वदन्तु - अहं कः ? ..........................................

4 अहं मेवाडस्य राजकुमारः । हल्दीघाटीयुद्धे राज्ञा अकबरेण पराजितः अपि अहं शिरः अवनमयितुं सिद्धः न जातः । मम नाम किम् ?

..........................................

5 अहम् अस्मि प्रसिद्धः पल्लवराजः । अहं चालुक्यराजं पुलिकेशिं (द्वितीयं) पराजितवान् । मया महाबलेश्वरे शिलामयमन्दिराणि निर्मितानि । अहं कः ?

..........................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..........................................

..........................................

..........................................

..........................................

भागग्रहीतुः नाम ..........................................

वयः .................... कक्ष्या ....................

सङ्केतः ..........................................

..........................................

..........................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

भारतनायकस्पर्धा-८
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७

उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, जून्, २००२

**भवद्भ्यः पारितोषिकं ददाति**




***नियमाः* -**

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

# HEY PEOPLE! TELL US HOW CLOSE YOU'RE TO POPEYE AND YOU COULD WIN A POPEYE WATCH FROM DASH!

Put your knowledge on Popeye to test by ticking the right answers to the following questions and you could win an exciting Dash! watch.

1. What does Popeye do for a living? He's a
   a. Sailorman ☐ b. Tailorman ☐
   c. Cobblerman ☐

2. What's Popeye's source of strength?
   a. Roast Beef ☐ b. Hotdogs ☐
   c. Spinach ☐

3. What's Popeye's girlfriend's name?
   a. Olive Oyl ☐ b. Coconut Oyl ☐
   c. Sunflower Oyl ☐

**Now dash this contest form to:**
The Dash! Chandamama Contest,
Titan Industries Ltd, Airport Road,
Bangalore-560 017.

**My name is:** ______________________
**I am a Boy☐ Girl☐. I am ______ years old**
**My address is:** ______________________
______________________
**Tel:** ______________________
**I read Chandamama in English ☐ Hindi ☐**
**Others ☐ (Please specify)** ______________

**Rules and regulations:**
1. Judges decision is final and binding.
2. Incomplete forms will not be considered.
3. Prizes are not exchangeable in lieu of cash.
4. All entries should reach us by 15th May 2002.



Rs. 295 onwards.

DASH!

Wow watches from Titan

# एवमाहुर्भवन्तः...

✱ कथाः यथा तथैव चित्राणि अपि मनोमोहकानि । न केवलं बालाः, अपि तु प्रौढाः अपि चन्दमामाम् आसक्त्या पठन्ति । एतेषां चित्राणां गुणवत्तारक्षणे अवधानं भवतु । तेन कथायाः पात्राणां हावभावादयः अपि प्रकाशिताः भवेयुः । चन्द्रमाः इव चन्दमामा अपि स्वकिरणैः जनान् आह्लादयतु । अहम् आशासे यत् 'चन्दमामा' मनुकुलस्य मार्गदर्शिका भवतु इति ।

**– उमामहेश्वरः, इन्दौर**



✱ पुनरारम्भं प्राप्तवती चन्दमामा रुचिरा दृश्यते । 'भारत-गौरवगाथा' 'देवीभागवतम्' इत्यादयः भारतीयपरम्परायाः ज्ञाने उपकारकाः सन्ति । भारतस्य संस्कृतेः इतिहासस्य च ज्ञानात् बालेषु देशविषये श्रद्धा, आदरः च वर्धते । एतादृश्यः रचनाः स्वदेशस्य अवगमने नितरां सहायिकाः भवन्ति ।

**– रमा पन्त, अजमेर**

✱ आ बहोः कालात् अहं चन्दमामायाः पाठकः अस्मि । एतस्याः कथाः मह्यं विशेषतः रोचन्ते । पूर्वम् एतस्यां धारावाहिन्यः आकर्षिकाः भवन्ति स्म । अग्रिमाङ्कस्य प्रतीक्षार्थं मां प्रवर्तयन्ति स्म । किन्तु एषु दिनेषु तादृशी धारावाहिनी न दृश्यते । एतम् अंशं मनसि निधाय चन्दमामायाः रोचकतावर्धने प्रयत्नं कुर्वन्तु ।

**– किशोरः, भिवानी**

✱ चन्दमामायां कथानां प्राधान्यं न्यूनं जातम् अस्ति । सामान्यज्ञानविषये अधिकम् अवधानं दीयमानम् अस्ति एषु दिनेषु । सामान्यज्ञानसम्बद्धानि पुस्तकानि विपण्यां लभ्यन्ते बहूनि । एवं स्थिते चन्दमामायाम् अस्ति तस्यैव विषयस्य प्रकाशनेन कः लाभः ? चन्दमामां न केवलं बालाः, अपि तु प्रौढाः अपि पठन्ति इत्येतत् स्मरन्तु कृपया । चन्दमामायाः यत् वैशिष्ट्यम् अस्ति तत् रक्षितुं प्रयासः भवतु इति आशासे ।

**– वामदेवः, सतारा**

✱ चन्दमामा मम प्रिया पत्रिका । भारतस्य संस्कृतिम्, इतिहासं, परम्परां च अवलम्ब्य ये विषयाः प्रकाश्यमानाः सन्ति ते निश्चयेन सन्ति ज्ञानवर्धकाः । किन्तु एतेन कथानां प्राधान्यं विघटते । धारावाहिन्यः अपि चित्ताकर्षिकाः न सन्ति ।

**– रोहिणी महेश, शाहपुर**



# राक्षसस्य पुण्यं कार्यम्

दुष्कामः नाम कश्चन निधिम् अन्विष्यन् दण्डकारण्यम् अगच्छत् । तत्र कश्चन राक्षसः तं बद्धवान् । तस्मात् भीतः दुष्कामः कम्पमानः जातः ।

राक्षसः तं धैर्यवचनानि वदन् - "भोः, मानवानां जन्तूनां च खादनं मम स्वभावः । अपि च मम जीवनम् अपि निकृष्टम् । एतस्मात् कदाचित् मम जुगुप्सा उत्पन्ना । एकस्मिन् दिने कस्यचन ऋषेः दर्शनम् अभवत् मम । तम् अहं मम दुःखपूर्णां कथां श्रावयित्वा सविनयं प्रार्थितवान् - 'मह्यम् अस्मात् राक्षस-जन्मनः मुक्तिमार्गं प्रयच्छतु, मनुष्यजन्मप्रदानं करोतु' इति । सः ऋषिः मम प्रार्थनां श्रुत्वा उक्तवान् - 'भवान् यदि किमपि पुण्यकार्यं करिष्यति तर्हि एतत् शक्यं स्यात्' इति । भवन्तं दृष्ट्वा अहं चिन्तयामि यत् पुण्यकार्यं कर्तुं समयः लब्धः इति । मयि अमोघा शक्तिः अस्ति । अतः कथयतु, भवते किं प्रियं करवाणि ?" इति ।

दुष्कामेन चिन्तितं यत् एतस्य साहाय्येन निधिः प्राप्तुं शक्यः इति । अतः सः राक्षसं पृष्टवान् - "निधिः कुत्र अस्ति इति किं भवान् वक्तुं शक्नुयात् ?" इति ।

"शक्नोमि एव । किन्तु मम प्रश्नः - निधिं प्राप्य भवान् किं करिष्यति इति । यदि भवान् असत्यं वदति तर्हि मया दर्शितोऽपि निधिः भवतः दर्शनयोग्यः न भविष्यति" इति उक्तवान् राक्षसः ।

तदा दुष्कामेन उक्तं - "निधेः लाभेन अहं धनिकः भविष्यामि । तेन धनेन शक्ति-शालिनां मल्लानां सैनिकानां च पालनं करिष्यामि । यः मां विरुध्य किमपि करिष्यति, यः मम वचनं नाङ्गीकरिष्यति तं तैः सैनिकैः पीडयिष्यामि, तम् अधोगतिं प्रापयिष्यामि च । अपि च विशालाक्षी मयि अनुरागवती अस्ति । ताम् अहं परिणेष्यामि" इति ।

''परपीडनरूपं नीचकार्यं न चिन्तनीयम् एव । या विशालाक्षी भवति अनुरागवती अस्ति सा भवतः परिणयं यथा अङ्गीकुर्यात् तथा अहं करिष्यामि'' इति उक्तवान् राक्षसः ।

''किन्तु विशालाक्षी तादृशेन परिणीता भवितुं न इच्छति, यस्य विवाहः पूर्वमेव सञ्जातं स्यात् । सा मम द्वितीया पत्नी भवितुं न इच्छेत् एव'' इति अवदत् दुष्कामः ।

दुष्कामस्य एतत् उत्तरं श्रुत्वा आश्चर्यं प्रकटयन् राक्षसः पृष्टवान् - ''भवतः प्रथम-पत्न्याः किम् अभवत् ? इदानीं सा कुत्र अस्ति ?'' इति ।

तदा दुष्कामः उक्तवान् - ''मया ग्रामदेव्यै बलिरूपेण अर्पिता सा । पत्नी बलिरूपेण अर्प्यते चेत् गृहे धनवृष्टिः भविष्यति इति उक्तवान् आसीत् कश्चन मान्त्रिकः । किन्तु बलिरूपेण पत्न्याः अर्पणस्य अनन्तरम् अपि गृहे कापि धनवृष्टिः न अभवत् । आरक्षकैः एतत् बलिकार्यं ज्ञातम् । अतः ते माम् अन्विष्यन्तः सन्ति । तेभ्यः मुक्तिं प्राप्तुमपि मम धनस्य आवश्यकता अस्ति । विशालाक्षीं लब्धुमपि धनम् अपेक्षितम्'' इति ।

''यः मरणं प्राप्तवान् तं पुनः उज्जीवयितुं मयि शक्तिः अस्ति । भवतः पत्नीम् अहं जीवयिष्यामि । भवतः सर्वाणि कष्टानि परिहरिष्यामि'' इनि अवदत् राक्षसः ।

तदा दुष्कामः अवदत् - ''मम पत्नी यदि उज्जीविता भविष्यति तर्हि विशालाक्षी मां न परिणयेत्'' इति ।

''दुष्ट ! भवान् न मनुष्यः । राक्षसात् मत्तः अपि नीचः भवान् अधमः पापी च । भवन्तं सज्जनं कर्तुं मया महान् प्रयत्नः कृतः । किन्तु मम सर्वोऽपि प्रयत्नः विफलः । भवन्तं खादित्वा अहम् अद्य मम बुभुक्षानिवारणं करिष्यामि'' इति वदन् राक्षसः दुष्कामं भक्षितवान् ।

द्वितीयक्षणे एव ऋषिः प्रत्यक्षः सन् - ''नीचं दुष्कामं खादता भवता पुण्यकार्यमेव कृतम् । एवमेव भवता एतावता अनेकानि पुण्यकार्याणि कृतानि । किन्तु अद्य यत् कार्यं भवता कृतं तत् सर्वापेक्षया उत्तमं कार्यम् । अतः राक्षसजन्मतः भवतः मुक्तिः भविष्यति । शीघ्रमेव भवान् मनुष्यजन्म प्राप्स्यति'' इति उक्त्वा ततः अदृश्यः अभवत् ।





# मायासरोवरम्

## २

*(जयशीलः सुप्तः आसीत् । मध्यरात्रे कश्चित् आर्तनादं श्रुत्वा सः जागरितः । श्मशाने विचित्राकारवतः शिरः छेदितवान् सः । ततः समीपस्थम् एकं गृहं गतवान् । गृहस्वामिनी काचित् वृद्धा । यदा सः तया सह वार्तालापं कुर्वन् आसीत् तदा हिरण्यनगरस्य रक्षकः द्वाभ्यां सह आगत्य द्वारस्य ताडनं कृतवान् । तदनन्तरम् ......)*

वृद्धा द्वारसमीपं गच्छन्ती एव जयशीलं पृष्टवती – ''वत्स ! किं कोऽपि अपराधः कृतः भवता ? रक्षकभटेभ्यः आत्मानं रक्षितुं तु अत्र न आगतं खलु ?'' इति ।

''अम्ब ! मया कोऽपि अपराधः न कृतः । जीविकार्थम् इतस्ततः अटन् अस्मि । उद्योगस्य अन्वेषणं कुर्वन् अस्मि'' इति अवदत् जयशीलः ।

वृद्धा तस्य वचने विश्वासं प्राप्तवती । ततः सा अग्रे गत्वा द्वारम् उद्घाटितवती ।

नगररक्षकः द्वारसमीपे स्थित्वा अवदत् – ''अम्ब ! श्मशानरक्षकस्य पुत्रस्य सिद्धसाधकस्य च विवादः प्रवृत्तः । तयोः विवादस्य परिहारार्थं मया अत्र आगन्तव्यम् अभवत् । किं खड्गधारी कश्चन युवकः अत्र आगतवान् ?'' इति ।

तावता जयशीलः तत्र आगतः । तं दृष्ट्वा श्मशानरक्षकः उच्चैः अवदत् – ''महोदय ! एषः एव मम पितुः शिरः कर्तितवान्'' इति ।

सिद्धसाधकः तं कोपेन पश्यन् अवदत् – ''अये मूर्ख ! किमर्थं पितरं जीवितं वदति भवान् ? स तु मृतः एव । मृतः कोऽपि किं जीवितुम् अर्हति ? सः युवकः अपूर्वखड्गेन यं मारितवान् सः न भवतः पिता, अपि तु कालकालः । एतत् रहस्यं मया कालकालमुखात् एव श्रुतम् अस्ति'' इति ।



नगररक्षकः तौ दृष्ट्वा क्रोधेन - ''अलं विवादेन । किञ्चित् तूष्णीं तिष्ठतां तावत्'' इति तर्जयित्वा जयशीलं किमपि वक्तुम् उद्युक्तः । तावता जयशीलः एव तम् अवदत् - ''महाशय । मम नाम जयशीलः इति । अमरावतीनगरीयः अहम् । श्मशाने कश्चन विकृताकारः आक्रमणार्थं यदा आगतः तदा मया आत्मरक्षणार्थं खड्गप्रयोगः कृतः । अनन्यगतिकतया मया तथा कृतम्'' इति ।

''भवता मारितः न कालकालः, अपि तु मम पिता एव । सः मृतः जातः इति ज्ञात्वा अहं तस्य शवं श्मशानम् आनीतवान् । ततः काष्ठानि आनेतुं मया यदा बहिः गतं तदा कस्याश्चित् देवतायाः अनुग्रहेण सः उज्जीवितः । यदा अहं प्रत्यागच्छन् आसं तदा तस्य शिरः कर्तयन्तं भवन्तम् अहं प्रत्यक्षं दृष्टवान्'' इति अवदत् श्मशानरक्षकः ।

''अये बाल ! सः शवः कस्य इति मया न दृष्टम् एव । मया मन्त्रशक्त्या तस्मिन् कालकालस्य आवाहनं कृतम् । ततः शवे प्राणशक्तिः उत्पन्ना । कालकालं सम्मुखीकर्तुम् अशक्नुवन् अहं धावित तदा एषः वीरः तस्य शिरः छित्त्वा मम रक्षां कृतवान्'' इति उक्तवान् सिद्धसाधकः ।

नगररक्षकः मन्दहासपूर्वकं जयशीलम् उक्तवान् - ''भवता स्वनाम जयशीलः इति उक्तं खलु ? एतौ त्रिचतुरघण्टाभ्यः व्यर्थविवादं कुर्वन्तौ स्तः, मम शिरः च खादन्तौ स्तः । यस्य शिरः भवता कर्तितं, सः कः इति मया अद्यावधि न ज्ञातम् । एतस्मिन् किमपि रहस्यम् अस्ति इति भाति मम । मन्त्री एव एतस्य निर्णयं कर्तुम् अर्हति । अतः भवन्तः त्रयः अपि मया सह आगच्छन्तु'' इति ।

ततः निर्गताः ते राजभवनं प्राप्तवन्तः । तस्मिन् एव समये मन्त्री अपि राजभवनं प्रविशन् आसीत् । नगररक्षकः तं प्रवृत्तं सर्वं विस्तरेण निवेदितवान् ।

सर्वम् अवधानपूर्वकं श्रुत्वा मन्त्री किञ्चित्कालं विचिन्त्य अवदत् - ''वैद्यः बान्धवाः च पूर्णतः विश्वसितवन्तः आसन् यत् श्मशानरक्षकः दिवंगतः इति । तस्य पुनरुज्जीवनं सर्वथा असम्भवम् । सिद्धसाधकः यथा कथयति तथा तदीये शवे कालकालस्य प्रवेशः जातः इत्यत्र एव विश्वासार्हता दृश्यते । तस्य शिरः एतेन कर्तितम् । तस्मात् सिद्धं यत् नगररक्षकस्य शिरः एतेन न कर्तितं, प्रत्युत नगररक्षकस्य शवं प्रविष्टवतः अन्यस्य हननं कृतम् इति । तथापि एतेन हननं कृतम् इत्यत्र

तु नास्ति सन्देहः । किन्तु.....''

तदा जयशीलः अवदत् - ''आत्मरक्षणार्थं शत्रोः मारणं यत् क्रियते तत् अपराधाय कथं भवेत् मन्त्रिवर्य !'' इति ।

''आम् । भवता उक्तम् अपि युक्तम् एव इति भासते'' इति चिन्तनमिश्रितस्वरेण एव अवदत् मन्त्री ।

ततः तान् उद्दिश्य - ''भवन्तः अत्रैव तिष्ठन्तु'' इति उक्त्वा राजानं द्रष्टुं सः अन्तः गतवान् । तस्मिन् समये राजा कनकाक्षः सेनाध्यक्षस्य पुत्रेण मङ्गलवर्मणा सह वार्तालापं कुर्वन् आसीत् । मन्त्रिणं दृष्ट्वा राजा पृष्टवान् - ''महामन्त्रिवर्य ! एषः युवराज्ञीयुवराजयोः अन्वेषणार्थं निर्गमनाय अनुज्ञां प्रार्थयन् अस्ति । एतद्विषये भवतः अभिप्रायः कः ?'' इति ।



''महाराज ! जयशीलनामकेन युवकेन मया मिलितम् । सः महापराक्रमी साहसी च । अलौकिकशक्तीनाम् आकरः अपि अस्ति सः इति भाति । तस्य खड्गः अमोघ-शक्त्या युक्तः अस्ति इति ज्ञातं मया'' इति अवदत् मन्त्री ।

मन्त्रिणः वचनं श्रुत्वा राजा कनकाक्षः चिन्तायां निमग्नः । मङ्गलवर्मा तु मनसि एव मन्त्रिणः विषये क्रोधं प्रकटितवान् । स्वस्य कोपं निग्रहीतुम् अशक्नुवन् सः कटुतामिश्रित-स्वरेण उक्तवान् - ''किं सः जयशीलनामकः सत्कुलजातः ? महाराजेन उक्तम् अस्ति यत् युवराज्ञीयुवराजयोः अन्वेषकाय अर्धराज्यं समर्प्यते इति । किं सः अर्धराज्यं प्राप्तुम् अर्हः ?'' इति ।

एतम् असङ्गतं प्रश्नं श्रुत्वा कोपं प्रदर्शयन् मन्त्री अवदत् - ''युवराज्ञीयुवराजयोः अपहर्ता कः, सः मानवः उत दानवः, देवः वा इत्यपि अद्यावधि न ज्ञातम् अस्माभिः । एतादृश्यां स्थितौ तयोः अन्वेषणं यः करिष्यति सः शक्तिशाली, पराक्रमी, सुयोग्यः च स्यात् एव । एतादृशाय शूराय अर्धराज्यस्य दाने का वा विप्रतिपत्तिः भवेत् ?'' इति ।

''तस्य खड्गः अपूर्वशक्तिशाली इत्यत्र कथं विश्वासं कुर्याम वयम् ? तं खड्गं मह्यं यच्छन्तु सकृत् । अहं तस्य परीक्षां करिष्यामि'' इति अवदत् मङ्गलवर्मा ।

कनकाक्षः मङ्गलवर्मणः वचनं समर्थयन् अवदत् - ''मन्त्रिवर्य ! जयशीलस्य खड्गस्य परीक्षणार्थं मङ्गलवर्मणे अवकाशः अवश्यं दातव्यः । यदि सः खड्गः वस्तुतः अपि शक्तिशाली स्यात् तर्हि तस्मै युवकाय



अस्माभिः पुरस्कारः दास्यते, आस्थाने योग्यः उद्योगः अपि दास्यते'' इति ।

''परीक्षा कीदृशी भवेत् महाराज ?'' मन्त्री अपृच्छत् ।

''अस्माकं मृगशालायाः अधिकारिणम् आदिशतु यत् पञ्जरबद्धौ उभौ व्याघ्रौ आनीयताम् इति । एतं खड्गं गृहीत्वा मङ्गलवर्मा पञ्जरतः बहिः आगतौ तौ व्याघ्रौ सम्मुखीकरिष्यति'' कनकाक्षराजः उक्तवान् ।

मन्त्रिणः आदेशस्य अनुसारं जयशीलः आनन्देन एव खड्गं मङ्गलवर्मणे दत्तवान् । ततः पञ्जरस्थौ उभौ व्याघ्रौ आनीतौ । चतसृषु दिक्षु भित्त्या आवृते अङ्गणे तौ स्थापितौ । मङ्गलवर्मा अपि तत् अङ्गणं प्रविष्टवान् । सः ज्ञापितः यत् पञ्जरयोः द्वारम् उपरिष्टात् उद्घाट्यते इति । राजा, मन्त्री, जयशीलः, अन्ये च उपरि स्थित्वा पश्यन्तः आसन् । यदा पञ्जरस्य द्वारम् उद्घाटितं तदा उभौ अपि व्याघ्रौ गर्जन्तौ मङ्गलवर्मसमीपम् आगतौ । मङ्गलवर्मा खड्गयुद्धे धनुर्विद्यायां च निपुणः आसीत् एव । किन्तु उभौ गर्जन्तौ समीपम् आगच्छन्तौ व्याघ्रौ यदा दृष्टौ तदा तु तस्य धैर्यं पूर्णतः विलुप्तम् ।

ऊर्ध्वभागतः एतत् पश्यन् जयशीलः चिन्तितवान् यत् प्राणरक्षणार्थं वा जयशीलः खड्गस्य उपयोगं करिष्यति इति । किन्तु भयग्रस्तः मङ्गलवर्मा कम्पमानः सन् निश्चलतया एकत्र स्थितः आसीत् । तस्य प्रोत्साहनस्य उद्देशेन जयशीलः उच्चस्वरेण अवदत् - ''मङ्गलवर्मन् ! भवतः हस्ते यः खड्गः अस्ति सः अमोघशक्तिशाली अस्ति । अतः अलं भीत्या । तेन खड्गेन तौ प्रहरतु तावत्'' इति ।

अनन्तरक्षणे एव कश्चन व्याघ्रः अग्रे आगत्य स्वस्य पादेन मङ्गलवर्माणं स्कन्धे प्रहृत्य व्रणम् अकरोत् । मङ्गलवर्मणः मनसि अभासत यत् मम मरणम् इदानीं निश्चितम् इति । अतः सः खड्गेन व्याघ्रं निवारयितुं प्रयत्नं कृतवान् । तदवसरे हस्तकम्पनकारणतः खड्गः तस्य हस्तात् च्युतः सन् भूमौ अपतत् ।

सिद्धसाधकः अपायसम्भावनां जानन् उच्चस्वरेण अवदत् - ''जयशील ! भवता कार्योद्यतेन भवितव्यम् इदानीम्'' इति ।

जयशीलः सकृत् करताडनं कृत्वा दशपादोन्नतायाः भित्तेः ऊर्ध्वभागतः उत्प्लुत्य अङ्गणे तिष्ठन् व्याघ्रस्य पुरतः स्थितं खड्गं हस्तेन गृहीतवान् ।

कनकाक्षः जयशीलस्य धैर्यं दृष्ट्वा आश्चर्यं हर्षं च प्रकटयन् - ''अहो ! धैर्यशालिता

एतस्य ! यदि एषः युवकः अस्माकं सहायकः स्यात् तर्हि निश्चयेन वयं युवराजं युवराज्ञीं च अन्वेष्टुं शक्नुयाम'' इति अवदत् ।

अङ्गणं प्रविष्टः जयशीलः पादेन भूमिं प्रणुदन् त्रिचतुराणि पदानि पृष्ठतः स्थापितवान् । तावता कश्चन व्याघ्रः आक्रमणार्थं समीपम् आगतः । जयशीलः झटिति पदद्वयम् अग्रे स्थापयित्वा तं व्याघ्रं कण्ठे बलात् प्रहृतवान् । प्राणापायस्थितिं प्राप्तवान् सः व्याघ्रः क्रन्दनं कुर्वन् भूमौ पतितः सन् लुण्ठन् पादौ अचालयत् । एतत् दृष्ट्वा भीतः अपरः व्याघ्रः पृष्ठाभिमुखं पदानि स्थापयन् पञ्जरं प्रविश्य शुनकः इव उपाविशत् । राजा कनकाक्षः, अन्ये सर्वे च सन्तोषेण करताडनं कुर्वन्तः जयकारं घोषितवन्तः ।

तदा मङ्गलवर्मा नेत्रे उन्मीलितवान् । मृतं एकं व्याघ्रं, पञ्जरे अपरं च दृष्ट्वा सः दीर्घम् निश्श्वस्य शिरः उन्नीय राजानं कनकाक्षम् अवदत् – ''महाराज ! एतस्य खड्गस्य शक्तिः अमोघा इत्यत्र नास्ति संशयः । दौर्भाग्यवशतः एषः मम हस्तात् च्युतः जातः । अतः एतस्य शक्तिं स्वयं परीक्षितुम् अहं न शक्तः । मया यत् करणीयं तत् जयशीलेन कृतम्'' इति ।

''भवता युक्तम् उक्तम् । मृत्युमुखं प्रविश्य प्रत्यागतं भवता'' इति वदन् मन्त्री धर्ममित्रः हसितवान् ।

''मया आदौ एव उक्तम् आसीत् खलु । स्वयं कालकालः एव एतं खड्गम् आशीवदिन अनुगृहीतवान् अस्ति इति । मम सहायता अपि एतेन सह यदि सम्मिलिता स्यात् तर्हि जयशीलः विश्वविजयी स्यात्'' इति अवदत् सिद्धसाधकः ।

''महाशक्तिशालिना खड्गेन युक्तः सन् अपि मङ्गलवर्मा किमपि कर्तुं न शक्तवान् खलु ?'' इति कनकाक्षः स्वस्य सन्देहं प्रकटितवान् ।





मन्त्री धर्ममित्रः शिरः अवनमय्य ऊर्ध्व-भागतः जयशीलम् अवदत् - ''जयशील ! उपरि आगच्छतु तावत् । भवतः धैर्य-साहसादयः नितरां श्लाघ्याः । भवान् अस्माकं सेनाध्यक्षस्य पुत्रस्य प्राणान् रक्षितवान् अपि । अतः भवते हार्दान् धन्यवादान् समर्पयामः वयम्'' इति ।

तदा जयशीलः अवदत् - ''यस्मिन् व्याघ्रः उपविष्टः अस्ति तस्य पञ्जरस्य द्वारम् आदौ पिधापयतु कृपया । अन्यथा निरायुधं मङ्गल-वर्माणं पुनः पीडयेत् सः'' इति ।

एतत् श्रुत्वा सिद्धसाधकः हसन् - ''मङ्गलवर्मणः हस्ते खड्गः अस्ति चेदपि किं प्रयोजनम् ? एतादृशस्य हस्ते इन्द्रायुधम् एव अस्ति चेदपि सर्वं निरर्थकं भविष्यति'' इति ।

मन्त्री हस्तं प्रसार्य जयशीलम् उपरि आनीतवान् । उपरि आगतं तं प्रीत्या आलिङ्ग्य सिद्धसाधकः अवदत् - ''अये जयशील ! साहसी भवान् । भयम् अपि भवादृशात् बिभेति निश्चयेन । कालकालस्य वशीकरणार्थं भवतः साहाय्यम् आवश्यकं मह्यम् । युवराजस्य युवराज्ञ्याः च अन्वेषणे सामर्थ्यं भवतः एकस्य एव अस्ति । यदि भवान् तत् कार्यं कुर्यात् तर्हि राज्ञः समस्या चिन्ता च परिहृता भवेत्'' इति ।

ततः सर्वे राजभवनं प्रति आगतवन्तः । राजभवनस्य द्वारे एव स्थित्वा श्मशान-रक्षकपुत्रः मन्त्रिणम् अवदत् - ''महाप्रभो ! मम पिता मरणं प्राप्य पुनः जीवितः आसीत् । तम् एषः पुनः मारितवान् । एतस्य परिहाररूपेण किमपि फलं दापयतु कृपया'' इति ।

मन्त्री तं दृष्ट्वा आश्वासनपूर्वकम् अवदत् - ''पिता मृतः इति चिन्तां परित्यजतु । भवन्तम् अद्यैव सर्वश्मशानानां परिवीक्षकं करिष्यामि । इदानीं यत् वेतनं प्राप्यते ततः दशगुणितं वेतनं प्राप्स्यति भवान् । अतः अधिककोलाहलम् अकृत्वा इतः निर्गच्छतु तावत्'' इति ।

''प्रभो ! यावत् जीवामि तावत् भवतः एतम् उपकारं न विस्मरामि अहम् । मृतः पिता उज्जीवितः इति यावत् आनन्दः अनुभूयते स्म तावता तस्य संहारतः दुःखम् अपि सम्प्राप्तम् । यदि सः इदानीं स्यात् तर्हि मम पदोन्नतिं दृष्ट्वा नितरां सन्तोषम् अनुभूतवान् स्यात् । अतः एव तस्य अनुपस्थितितः शोचामि....'' इति वदन् अश्रूणि मार्जयन् श्मशानरक्षकः ततः निर्गतवान् । तदनन्तरं राजा, मन्त्री, सिद्धसाधकः, जयशीलः च

सभाभवनं प्रविष्टवन्तः ।

कनकाक्षः सिंहासने उपविश्य क्षणकालं चिन्तनं कृतवान् । ततः सः मन्त्रिणम् उद्दिश्य अवदत् - ''मन्त्रिवर्य ! इदानीं किं करवाम ? युवराज्ञी-युवराजयोः अन्वेषणार्थं कृताः सर्वे प्रयत्नाः विफलाः । इदानीं तत् कार्यं जयशीलाय अर्प्यते चेत् किं भवेत् ?'' इति ।

मन्त्री जयशीलं पश्यन् यावत् किमपि वक्तुम् उद्युक्तः तावता सिद्धसाधकः अवदत् - ''युक्तं भविष्यति महाराज ! भवतः पुत्रीपुत्रयोः रक्षणार्थं साहसमात्रं न पर्याप्तम् । तेनैव सह अलौकिकशक्तिज्ञानम् अपि आवश्यकम् । अतः जयशीलेन सह गमनाय मह्यम् अपि अनुज्ञा दातव्या कृपया'' इति ।

तदा जयशीलः अवदत् - ''महाराज ! मया किञ्चित् निवेदनीयम् अस्ति'' इति ।

''वदतु निर्भीकतया । भवतः अभिप्रायस्य श्रवणे वयम् अपि समुत्सुकाः'' इति ।

''महाराज ! स्वदेशं परित्यज्य उद्योगम् अन्विष्यन् अहम् अत्र आगतः । अतः मह्यं यदि कोऽपि उद्योगः दीयेत तर्हि अहम् उपकृतः भवेयम्'' इति अवदत् जयशीलः ।

तदा मन्त्री अवदत् - ''जयशील ! महाराजः भवते निश्चयेन उद्योगं दास्यति । अद्य आरभ्य राजोद्योगिषु अन्यतमः भवान् । एतस्मात् क्षणात् राजाज्ञायाः पालनं भवतः आद्यं कर्तव्यम्'' इति ।

''निस्सन्देहम् । स्वकर्तव्यनिर्वहणाय अहं सन्नद्धः अस्मि । महाराजः यत् आज्ञापयति तत् शिरसा वक्ष्यामि अहम्'' इति विनयेन अवदत् जयशीलः ।

तदीयविनयव्यवहारेण सन्तुष्टः मन्त्री अवदत् - ''जयशील ! युवराज्ञीयुवराजयोः अन्वेषणाय भवता अचिरात् एव निर्गन्तव्यम् इति महाराजस्य अपेक्षा । कार्यं समाप्य यथाशीघ्रं प्रत्यागन्तव्यं भवता'' इति ।

अत्रान्तरे कश्चन राजभटः आस्थानं प्रविश्य एकं त्रुटितं खड्गं मुक्ताहारं च दर्शयन् राजानम् अवदत् - ''महाराज ! यस्य वृक्षस्य अधः युवराजः युवराज्ञी च अदृश्यतां गतवन्तौ तस्य समीपे एतत् उभयं केनचित् भिल्लयुवकेन प्राप्तम् अस्ति । तस्य मानसिकस्थितिः विलक्षणा अस्ति । सः उन्मत्तः इव व्यवहरति'' इति ।

- *(अनुवर्तते)*



# संन्यासस्वीकारस्य अर्हता

रामनारायणः पत्न्या पुत्राभ्यां च सह सुखेन वसति स्म । कदाचित् तस्य मनसि इच्छा उत्पन्ना यत् मया संन्यासः स्वीकरणीयः इति । एषः विचारः अनुचितः इति पत्नी तं बहुधा बोधितवती । तथापि रामनारायणस्य विचारे परिवर्तनं न जातम् ।

''संन्यासस्वीकाराय काचित् योग्यता आवश्यकी । सा भवति नास्ति । भवतः पुत्रौ अपि अल्पवयस्कौ । अतः संन्यासस्वीकरणविचारः परित्यज्यताम्'' इति बान्धवाः हितैषिणः च बोधितवन्तः । तथापि रामनारायणः स्वनिर्णये परिवर्तनं न कृतवान् ।

एकदा सः गृहात् प्रस्थितवान् एव । तदा पत्नी उक्तवती – ''मार्गे बुभुक्षा भवेत् खलु ? अतः किञ्चित् पाथेयं ददामि । नयतु कृपया'' इति ।

रामनारायणः पाथेयं स्वीकृत्य ततः प्रस्थितवान् । मार्गे यदा बुभुक्षा जाता तदा सः वृक्षस्य च्छायायाम् उपविश्य पाथेयम् उद्घाटितवान् । पाथेये तुषाः आसन्, न तु अन्नादयः । एतत् दृष्टवतः रामनारायणस्य महान् कोपः आगतः । सः साक्षात् गृहं प्रत्यागत्य पत्नीं सम्यक् निन्दितवान् ।

तदा पत्नी उक्तवती – ''यः संन्यासं स्वीकर्तुम् इच्छति तस्य पारिवारिकबन्धनं, कोपः, कामनाः वा न स्युः । आत्मनिग्रहवन्तः स्युः ते'' इति ।

एतत् श्रुत्वा लज्जितः रामनारायणः संन्यासस्वीकारविचारं परित्यक्तवान् ।





# वेताल-कथा

## माता एव दैवतम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षसमीपं गत्वा वृक्षात् शवम् अवतार्य मौनेन यथापूर्वं श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''राजन्, जगति अनेके तादृशाः दृश्यन्ते, ये विघ्न-सम्भावनया सदा भीताः भवन्ति । कार्यस्य समाप्तिविषये विश्वासः न भवति तेषाम् । भवान् तु तादृशः न । तथापि अर्धरात्रकाले श्मशाने विद्यमानानि कष्टानि किमर्थं सहते भवान् ? भवता स्वीकृतम् एतत् कार्यं सर्वथा राजोचितं न । प्रायः भवान् कस्यचित् आराधकः भक्तः वा स्यात् । किन्तु मम तु भाति यत् भवान् यस्य भक्तः अस्ति सः एव भवतः कष्टस्य मूलं स्यात् इति । अत्र उदाहरणरूपेण अहं भवते अङ्गदनामकस्य मुनेः विश्वेश्वरनामकस्य तरुणस्य च कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।



अनन्तरं वेतालः कथाम् आरब्धवान् -

पूर्वं रत्नगिरौ रत्नगुप्तनामकः कश्चित् भाग्यवान् वसति स्म । रत्नावती तस्य पत्नी । उभौ अपि परोपकारिणौ दैवभक्तौ च । बहूनां वर्षाणाम् अनन्तरं तयोः एका पुत्री जाता । तस्याः नाम अन्नपूर्णा । अत्यन्तं प्रीत्या तौ तां पालयतः स्म । पुत्री एव तयोः सर्वस्वम् आसीत् । किन्तु पञ्चमे वयसि सा केनचित् अज्ञातेन व्याधिना पीडिता अभवत् ।

अन्नपूर्णा यत् खादति तत् जीर्णं न भवति स्म । अतः सा किमपि खादितुं न शक्नोति स्म । प्रतिदिनं प्रातः रात्रौ च सा महतीं शिरोवेदनाम् अनुभवति स्म । वेदनां सोढुम् अशक्ता सा क्रन्दति स्म । बहवः वैद्याः तस्याः चिकित्सां कृतवन्तः । किन्तु किमपि प्रयोजनं न अभवत् । अनन्यगतिकः तस्याः पिता समीपस्थम् अरण्यं गत्वा अङ्गदनामकं मुनिं स्वस्य दुःखदायिनीं कथां श्रावितवान् ।

अङ्गदः किञ्चित्कालं ध्यानमग्नः भूत्वा विषयं ज्ञात्वा नेत्रे उन्मील्य अवदत् - ''पुत्र्याः जन्मनः अनन्तरं तस्याः विषये भवतो: अनुरागः किञ्चित् अधिकः एव आसीत् । तस्मात् भवान् दैवभक्तिम् उपेक्षितवान् । अतः एव देवः पुत्र्याः अस्वास्थ्यं दत्त्वा प्रवृत्तम् अनौचित्यं स्मारितवान् । अतः तस्यां दैवभक्तिं जागरयतु । तेन सा स्वस्था भविष्यति'' इति ।

रत्नगुप्तः अङ्गदस्य सूचनाम् अक्षरशः पालितवान् । तदारभ्य अन्नपूर्णा श्रद्धापूर्वकं भगवतः पूजादिकार्येषु मग्ना अभवत् । खादितुं यदि किमपि दीयते तर्हि भगवतः प्रसादं मत्वा खादति स्म सा । एतेन तस्याः व्याधिः निवृत्तः अभवत् । किन्तु गच्छता कालेन सा बालध्रुववत् भक्तिमार्गानुयायिनी जाता ।

दैवभक्तिः एव अन्नपूर्णायाः अपररोगरूपेण परिणता इति ज्ञात्वा रत्नगुप्तः दुःखितः अभवत् । यदा सा युवावस्थां प्राप्तवती तदा सः तस्याः विवाहस्य सज्जताम् आरब्धवान् । तदा सा - ''मम जीवनं भगवते समर्पितम् अस्ति । अतः मम विवाहः मास्तु'' इति उक्तवती ।

रत्नगुप्तः तस्याः अङ्गीकारं प्राप्तुं बहुधा प्रयत्नं कृतवान् । कदाचित् भायितवान् अपि । किन्तु सा विचलिता न अभवत् । यदा प्रयत्नाः सर्वे विफलाः अभवन् तदा सः पुनश्च अङ्गदस्य समीपं गत्वा स्वस्य दुःखगाथां श्रावयित्वा - 'कृपया भवता मम गृहम् आगत्य पुत्री बोधनीया' इति निवेदितवान् ।

अङ्गदः रत्नगुप्तस्य गृहम् आगतवान् । तत्र सः अन्नपूर्णायाः व्यवहारं परिशील्य अवदत् - ''वत्से ! प्रत्येकस्मिन् मनुष्ये भगवान् अस्ति । भवत्या मनुष्ये भगवान् द्रष्टव्यः । अतः भवती मातापितृभ्यां चितं युवकं विना विरोधं परिणयतु । पत्यां च भगवन्तं पश्यतु । तदा भगवान् भवत्यां दयां प्रदर्शयन् भवत्यै सन्तानप्राप्तिरूपं वरं दास्यति । तस्मै सन्तानाय अपि स्वस्य अंशं दास्यति भगवान्'' इति ।



अन्नपूर्णा अङ्गदस्य वचनम् अङ्गीकृत्य वैभवनामकेन धनिकेन वणिजा परिणीता जाता । वर्षाभ्यन्तरे एव सा सुन्दरं पुत्रं प्रसूतवती । भगवान् एव पुत्ररूपेण अवतीर्णः इति सा भावयति स्म । पुत्रस्य नाम 'विश्वेश्वरः' इति निश्चितम् ।

विश्वेश्वरः मातृवात्सल्यम् अनुभवन् भक्तिमयवातावरणे वर्धमानः आसीत् । देवपूजाः तु तस्य गृहे प्रतिनित्यं भवन्ति स्म । अल्पे काले एव ऐहिकसुखानां विषये तस्मिन् विरक्तिः उत्पन्ना । देवदर्शनार्थं तस्य मनसि व्याकुलता उत्पन्ना । सः मोक्षमार्गस्य अन्वेषणम् आरब्धवान् । पुत्रः इतरभिन्नः इति अन्नपूर्णायाः मनसि चिन्ता आरब्धा ।

वैभवः पत्न्याः दुःखस्य कारणं ज्ञात्वा अवदत् - ''भवती एव पुत्रे दैवभक्तिं जागरितवती । भवत्याः कारणतः एव सः महान् देवभक्तः अभवत् । इदानीं वा भवती तं भगवतः दूरे स्थापयतु'' इति सूचितवान् ।

अन्नपूर्णायै पत्युः सूचना अरोचत । परेद्यवि सा पुत्रम् आहूय कठोरस्वरेण - ''भवतः जीवने एषः कालः क्रीडार्थम् अस्ति । अद्य आरभ्य भवान् देवपूजां स्थगयतु । इतरबालकाः इव पठनं लेखनं क्रीडनं च करोतु'' इति सूचितवती ।

विश्वेश्वरः मातुः आज्ञां पालयितुं न शक्तः । अस्मिन् विषये सः बहुभिः सह चर्चां कृतवान् । किन्तु ते सर्वे अन्नपूर्णायाः एव समर्थनं कृतवन्तः । अतः सः गृहे स्थातुं न शक्तः । सः अरण्यं गत्वा कस्यचित् वृक्षस्य अधः उपविश्य तपस्याम् आरब्धवान् । तस्मिन् अरण्ये केनापि क्रूरमृगेण तस्य उपरि आक्रमणं न कृतम् । अत्र कारणं - तस्मिन् निहितः दैवांशः, उत मातुः प्रेम्णः महिमा इति तु भगवान् एव जानाति । कोऽपि विषजन्तुः तं स्प्रष्टुं शक्तः न आसीत् । यदा बुभुक्षा भवति तदा नेत्रे निमील्य प्रार्थनाकरणेनैव फलानि लभ्यन्ते स्म तेन ।

केऽपि विश्वेश्वरं न अभिज्ञातवन्तः । परितः प्रवर्तमानानां विषयाणां विषये अपि तस्य अवधानं न आसीत् । गृहं परित्यज्य यदा सः गतवान् तदा सः दशवर्षीयः आसीत् । तदनन्तरं तेन अरण्ये दश वर्षाणि यावत् घोरतपस्या कृता । तथापि सः भगवतः दर्शनं न प्राप्तवान् ।

अथ कदाचित् विश्वेश्वरः सरोवरे स्नानं कुर्वन् आसीत् । तदा कश्चित् व्याधः हरिणम् अनुसृत्य मृगयार्थं तत्र आगतवान् । सः विश्वेश्वरं दृष्ट्वा आश्चर्यचकितः सन् - ''परमेश्वर, यथा भवान् अर्जुनाय दर्शनं दत्तवान् तथैव अद्य मह्यम् अपि दर्शनं कल्पितवान् खलु ? निश्चयेन अहं भाग्यशाली'' इति वदन् श्रद्धापूर्वकं नमस्कृतवान् ।

विश्वेश्वरः सरोवरात् बहिः आगत्य - ''भवान् कः इति अहं न जानामि । किन्तु निश्चयेन भवान् मत्तः ज्येष्ठः अस्ति । भवता मम नमस्कारः न करणीयः'' इति उक्तवान् ।

''भवतः मुखे सूर्यस्य तेजः अस्ति । कण्ठे सर्पहारः अस्ति । अतः न केवलं प्रणामाः, अपि तु भवतः पादस्पर्शः मया करणीयः'' इति वदन् साष्टाङ्गनमस्कारं कृतवान् व्याधः । विश्वेश्वरः आश्चर्यचकितः अभवत् । सः स्वस्य शिरः कण्ठं च स्पृष्ट्वा ज्ञातवान् यत् स्वस्य शरीरं पूर्ववत् एव अस्ति इति । तस्मिन् तु किमपि परिवर्तनं न जातम् आसीत् । सः व्याधम् उद्दिश्य किमपि वक्तुम् उद्युक्तः । तावता व्याधः - ''अहो, भगवान् मयि दयां प्रदर्शितवान् अस्ति । पुनश्च सः अदृश्यः अपि अभवत् । मादृशः भाग्यशाली भूलोके अपरः न स्यात्'' इति वदन् महता सन्तोषेण ततः निर्गतवान् ।

तदा विश्वेश्वरः - 'अहम् ईश्वरः ? कथम्





एतत् शक्यम् ? मयि भगवतः आवाहनं तु न जातं स्यात् खलु ? यत् अहं द्रष्टुं न शक्नोमि तत् अन्ये मयि पश्यन्तः सन्ति' इति चिन्तनम् आरब्धवान् । तस्य मनस्स्थितिः इतोऽपि विचित्रा अभवत् । बहुधा विचिन्त्य वास्तविकतां ज्ञातुं सः जनानां सम्मुखे गन्तुं निश्चितवान् । जनाः एव सत्यांशस्य विषये निर्णयं कुर्वन्तु इति तस्य आशयः आसीत् ।

यदा सः रत्नगिरेः दिशि प्रस्थितवान् तदा मार्गे अङ्गदमुनिः तस्य सम्मुखम् आगतवान् । तदा तस्मिन् मुनौ वार्धक्यस्य चिह्नानि स्फुटं दृश्यन्ते स्म । सम्भाषणसमये अङ्गदमुनिः ज्ञातवान् यत् एषः अपरिचितः रत्नगिरिं प्रति गच्छन् अस्ति इति । अतः मुनिः तम् उद्दिश्य – ''पुत्र ! पूर्वं भाति स्म यत् सकृत् वा भगवतः दर्शनं भवेत् इति । किन्तु दश वर्षाणि अतीतानि चेदपि भगवतः दर्शनं तु न जातं मम । 'रत्नगिरौ अन्नपूर्णानामिका काचित् पतिव्रता स्त्री अस्ति । तस्याः विश्वेश्वरनामकः कश्चित् उत्तमः पुत्रः अस्ति । तस्य दर्शनं क्रियते चेत् भवतः समस्या परिहृता भविष्यति' इति काचित् देवी मम स्वप्ने आगत्य सूचितवती । तदनुसारं प्रतिवर्षं रत्नगिरिं गत्वा विश्वेश्वरेण मिलित्वा आगच्छामि । किन्तु मम समस्या यथापूर्वम् एव अस्ति । भवान् तं सूचयतु यत् 'अङ्गदस्य स्वास्थ्यं तावत् सम्यक् नास्ति । अतः तेन मेलितुं न शक्यते । कोऽपि सन्देशः अस्ति चेत् प्रेषयतु इति'' इति उक्तवान् ।

अङ्गदस्य वचनैः विश्वेश्वरः इतोऽपि सन्देहग्रस्तः अभवत् । सः अङ्गदाय प्रवृत्तं सर्वं सूचयित्वा – ''अहं दशभ्यः वर्षेभ्यः अरण्ये तपः आचरन् अस्मि । एवं स्थिते भवान् वदति यत् प्रतिवर्षं मया मिलितम् इति । कथम् एतत् शक्यम् ?'' इति पृष्टवान् ।

तदा अङ्गदः विश्वेश्वरं अवधानपूर्वकं पश्यन् – ''मम दृष्टिः दुर्बला जाता अस्ति । अतः एतावत्पर्यन्तं अहं भवन्तं अभिज्ञातुं न शक्तवान् । अहं भवतः गृहे भवता एव मिलामि स्म । इदानीम् अहं किञ्चित् किञ्चित् अवगच्छन् अस्मि । भवतः माता स्वपुत्रे भगवन्तं दृष्टवती । किन्तु भवान् तां परित्यक्तवान् । भक्तस्य मानःक्लेशं द्रष्टुं भगवान् न शक्नोति । अतः सः भवतः रूपं धृत्वा तत्र वसति स्म । अहम् अपि मूर्खः एव । यतः प्रतिवर्षं भवतः गृहं गत्वा भगवतः दर्शनं कुर्वन् आसम् । किन्तु एतत् सत्यम् अवगन्तुं सर्वथा न शक्तं मया । भगवान् एव

व्याधरूपेण आगत्य भवन्तं गृहगमनाय प्रवर्तितवान् । दशवर्षाणां तपसः अनन्तरं भवते भगवतः दर्शनम् अभवत् । इतःपरं गृहं गच्छतु । परमात्मानम् अपि मुग्धं कर्तुं समर्थात् मातृप्रेम्णः वञ्चितः अभवत् भवान् । मातृदेव्यां दैवत्यं पश्यन् शेषजीवनं यापयतु'' इति उक्तवान् ।

विश्वेश्वरः किमपि अकथयन् अङ्गदमुनिं साष्टाङ्गं प्रणम्य वेगेन गृहस्य दिशि पदानि स्थापितवान् ।

एतां कथां श्रावयित्वा वेतालः अवदत् - ''राजन्, विश्वेश्वरस्य जीवनस्य लक्ष्यम् आसीत् यत् तपस्यां कृत्वा भगवतः दर्शनं प्राप्तव्यम् इति । अतः एव सः शारीरक-सुखानि मातृप्रेम च परित्यज्य अरण्यं प्रति गतवान् । तादृशं यदि सामान्यः कश्चित् 'माता एव दैवतम्' इति सूचयेत् तर्हि तत् असङ्गतम् न अभविष्यत् । किन्तु तत् उक्तं महामुनिना । किं सः अविवेकी न ? किं तस्य धार्मिक-चिन्तनं, तार्किकदृष्टिः वा आसीत् ? तस्य असङ्गतव्यवहारस्य कारणं किं स्यात् ? तस्य वार्धक्यम् एव तत्र कारणम्, उत तदीयम् अस्वास्थ्यम् ? मम एतेषां सन्देहानां परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः शतधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''भगवान् करुणामयः । यदि सः दर्शनं दातुम् इच्छति तर्हि केनापि रूपेण भक्तस्य पुरतः प्रत्यक्षः भवति । एतत् रहस्यं ज्ञातुं न शक्तवान् विश्वेश्वरः । अङ्गदः यदा अरण्ये प्रवृत्तं सर्वं विश्वेश्वरद्वारा श्रुतवान् तदा 'व्याधरूपेण आगतः शिवः एव । भगवद्दर्शनेन भवतः तपस्या सफला अभवत्' इति वक्तव्यमेव अभवत् । एतत् सत्यं यदा प्रकटितं जातं तदापि यदि विश्वेश्वरः तपस्यायाः अनुवर्तनार्थम् अरण्ये अस्थास्यत् तर्हि सा मूर्खता एव अभविष्यत् । अतः एव अङ्गदमुनिः 'मातरि दैवं पश्य' इति हितबोधं कृतवान् । एषा प्रवृत्तिः अङ्गदस्य आध्यात्मिकपरिपक्वतां, धार्मिकपरिपक्वतां च द्योतयति । वार्धक्यस्य, अस्वास्थ्यस्य वा अत्र कोऽपि सम्बन्धः नास्ति'' इति ।

एवं राज्ञः मौनस्य भञ्जने सफलः वेतालः शवसहिततया ततः अदृश्यः भूत्वा पुनश्च वृक्षे लम्बमानः अतिष्ठत् ।



# तपोबलं श्रेष्ठं मान्त्रिकबलादपि




सहस्रशः वर्षेभ्यः पूर्वं प्रवृत्ता घटना एषा । तदा वातापिः इल्वलः चेति उभौ राक्षससहोदरौ आस्ताम् । तयोः गृहं नगरात् अनतिदूरे स्थिते अरण्ये आसीत् । 'महती सम्पत्तिः सम्पादनीया' इति तयोः चिन्तनम् आसीत् । सम्पत्तेः सम्पादनार्थं ताभ्यां विलक्षणः कश्चन उपायः आश्रीयते स्म ।

इल्वलः धार्मिकपुरुषस्य वेषं धृत्वा गृहात् निर्गत्य नागरस्य मार्गेषु सञ्चरति स्म । राजानं दृष्ट्वा प्रत्यागच्छन्तः ब्राह्मणाः, वणिजः वा तेन दृश्यन्ते स्म । सः तान् निवेदयति स्म - ''मम गृहे किञ्चित् विश्रम्य प्रयाणम् अनुवर्तयन्तु कृपया'' इति । तस्य विनयपूर्वकं निवेदनं तिरस्कर्तुम् अशक्नुवन्तः अन्यदेशीयाः तम् अनुसरन्ति स्म ।

इल्वलः तान् स्वगृहं नीत्वा स्नानार्थं शीतलजलोपेतं सरोवरं दर्शयति स्म । ''स्नानं समाप्य भवन्तः स्वागतप्रकोष्ठे किञ्चित् विश्रान्तिसुखम् अनुभवन्तु । अचिरात् एव अहं स्वादुपाकं सज्जीकरिष्यामि'' इति उक्त्वा गृहं प्रविशति स्म सः ।

तेन विशेषपाकः सज्जीक्रियते स्म । सः पाकः अजमांसेन युक्तः भवति स्म । स च अजः तु विलक्षणः । इल्वलस्य अनुजः वातापिः एव अजरूपेण परिवर्तते स्म स्व-मायया । तं हत्वा तदीयमांसेन पाकं करोति स्म इल्वलः । अतिथयः एतत्सर्वं न जानन्ति स्म । ते सन्तोषेण भोजनं कुर्वन्ति स्म ।

तेषां भोजनस्य अनन्तरम् इल्वलः स्वस्य सहोदरं स्मरन् वदति स्म - ''अये वातापे ! कुत्रास्ति भवान् ? कृपया अत्र आगच्छतु'' इति ।

तदा अतिथीनाम् उदरे विलक्षणा वेदना उत्पद्यते स्म । क्रमशः सा वेदना वर्धते स्म ।



किं प्रवतति इति यावत् ते जानन्ति तावता तेषाम् उदरं विदारितं भवति स्म । वातापेः शरीरभागाः तेषाम् उदरं विभज्य बहिः आगच्छन्ति स्म । एवं ते मृताः भवन्ति स्म । ततः इल्वलः कमपि मन्त्रं जपित्वा सहोदरम् उज्जीवयति स्म । अनन्तरक्षणे वातापिः तत्र मन्दहासपूर्वकम् उपस्थितः भवति स्म ।

मृतानां शरीराणि अरण्ये कस्मिंश्चित् गर्ते क्षिपतः स्म तौ सहोदरौ । एषा एव घटना बहुवारं प्रवृत्ता ।

एतेन क्रमेण वातापिः इल्वलः च महाधनिकौ सञ्जातौ । तयोः ऐश्वर्यं कथम् आगतम् इति जनाः तु न जानन्ति स्म । ते चिन्तयन्ति स्म – 'प्रायः कोऽपि निधिः प्राप्तः स्यात् । अथवा अरण्यवासी धनिकः कश्चित् वैराग्यं प्राप्य संन्यासी जातः स्यात् । संन्यासस्वीकरणसमये समग्रम् ऐश्वर्यम् एतयोः कृते दत्तवान् स्यात् सः' इति । तयोः गृहस्य समीपे अन्यस्य कस्यापि गृहं न आसीत् इत्यतः वस्तुस्थितिः केनापि न ज्ञायते स्म ।

अगस्त्यः कश्चन श्रेष्ठः ऋषिः । कदाचित् धार्मिककार्यार्थं धनस्य आवश्यकता आपतिता तस्य । अतः सः धनिकानां समीपं गत्वा धनं याचितवान् । ते उक्तवन्तः – ''वयं किञ्चित् धनं दातुं शक्नुयाम । किन्तु महाधनिकौ वातापील्वलौ तु भवता अपेक्षितात् अपि अधिकं दातुं समर्थौ । किमर्थं भवता तयोः समीपं न गन्तव्यम् ?'' इति ।

एतं प्रस्तावम् अङ्गीकुर्वन् अगस्त्यः वातापील्वलयोः गृहं गतवान् । तौ विनयेन तस्य स्वागतं कृतवन्तौ । अग्रजः इल्वलः उपवेशनार्थम् आसनं प्रदर्शयन् अवदत् – ''भवतः उपस्थित्या अस्माकं गृहं पवित्रं जातम् । वयं धन्याः'' इति ।

''मान्यवर ! भवतः अपारा सम्पत्तिः अस्ति इति श्रुत्वा मया अत्र आगतम् । भवतः शरीरं मुखं च सम्पत्तिमत्त्वं द्योतयतः'' इति वदन् अगस्त्यः इल्वलस्य मुखं निर्निमेषं दृष्टवान् । अतः सः तयोः सम्पत्तेः मूलकारणं ज्ञातवान् ।

''एतत्सर्वं भवादृशानां श्रेष्ठपुरुषाणाम् अनुग्रहतः सम्पन्नम् । किं मानवप्रयत्नेन ? सर्वं भगवतः इच्छानुगुणं प्रवर्तते'' इति अवदत् इल्वलः ।

ततः सः पुनरवदत् – ''आर्य ! किञ्चित् विश्रान्तिसुखम् अनुभवतु । अहं भवदर्थम् अजमांसेन विशेषपाकं करिष्यामि'' इति । तावता वातापिः अजरूपं प्राप्य गृहस्य पुरतः

एव आगत्य स्थितवान् आसीत् ।

''किमर्थं मम निमित्तम् एतस्य निष्पापस्य मारणम् ? अलं हिंसया । शाकैः एव पाकं सज्जीकरोतु तावत्'' इति अवदत् अगस्त्यः ।

''नैव ! अजमांसेन पाकः सज्जीकृतः चेदेव मम तृप्तिः । स च पाकः भवता भक्षणीयः एव'' इति सानुरोधम् अवदत् इल्वलः ।

ततः अजः मारितः । उपस्थितस्य अतिथेः निमित्तम् इल्वलः अजमांसेन विशेषपाकं सज्जीकृतवान् । अगस्त्यः इल्वलस्य कुतन्त्रं जानन् अपि अजानन् इव व्यवहरन् मन्दहासपूर्वकम् एव भोजनं समापितवान् ।

भोजनानन्तरं सः अवदत् - ''अद्य भोजनम् उत्कृष्टम् आसीत् । एतादृशं भोजनं दत्तवते भवते अनेके धन्यवादाः'' इति ।

''अनुगृहीतोऽस्मि । मया एतद्विषये किञ्चित् वक्तव्यम् अस्ति । एतादृशं भोजनं ये अत्र कृतवन्तः ते पुनः स्वजीवने एतादृशम् अवकाशं प्राप्तुं न अर्हन्ति'' इति वदन् अट्टहासं कृतवान् इल्वलः । ततः सः अनुजं वातापिम् उच्चैः आहूतवान् ।

मुनिः अगस्त्यः तु हस्तौ बद्ध्वा निश्चिन्ततया उपविष्टः आसीत् ।

इल्वलः पुनः अनुजम् आहूतवान् उच्चैः - ''वातापे, वातापे ! बहिः आगच्छतु तावत् । कुतो विलम्बः ?'' इति ।

तदा अपि अगस्त्येन उदरवेदना अनुभूयमाना न दृष्टा इल्वलेन । इल्वलः इदानीं किञ्चिदिव भीतः । 'किं प्रवृत्तं स्यात् ?' इति ज्ञातुं सः मुनेः समीपं गत्वा परीक्षादृष्ट्या अवलोकितवान् ।

''मित्र ! भवतः अनुजः बहिः आगन्तुं न अर्हति । यतः मया जीर्णीकृतः सः'' इति मन्दहासपूर्वकम् अवदत् अगस्त्यः ।

एतत् श्रुत्वा भीत्या कम्पमानः इल्वलः आगस्त्यस्य पादौ गृहीत्वा क्षमां प्रार्थितवान् । अगस्त्याय यावत् अपेक्षितं तावत् ऐश्वर्यं दत्त्वा सः अवदत् - ''इतःपरम् एतादृशं दुष्कृत्यं न क्रियते । कृपया क्षन्तव्यः अहम्'' इति ।

एवं वातापील्वलयोः पीडा समाप्ता । अगस्त्यस्य सामर्थ्येन प्रमाणीकृतं यत् मान्त्रिकशक्तितः अपि तपोबलम् एव श्रेष्ठम् इति ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

चिरप्रतीक्षितः विरामकालः उपस्थितः अस्ति खलु ? शाला, कक्ष्या, पाठ्यपुस्तकानि, टिप्पणीपुस्तकानि च अग्रिमे मासद्वये विस्मर्तुं शक्यानि । भवतु बहवः गृहात् दूरे 'गृहम्' अन्वेष्टुं प्रयत्नशीलाः स्युः । एतस्य मासस्य प्रश्नाः भवद्भिः द्रष्टुम् इष्टानि स्थलानि अधिकृत्य सन्ति, यानि भवन्तः एतावता प्राप्तवन्तः स्युः अपि । एते प्रश्नाः भवतां स्थलविषयकं ज्ञानं विस्तारयति इति वयं विश्वसिमः ।

१. कर्णाटकस्थं गुलबर्गा पूर्वं कस्यचित् राजधानी आसीत् । तस्य राज्यस्य नाम किम् ? कः तत् संस्थापितवान् ? तच्च कदा ?
२. एका कुल्या द्वीपसमूहद्वयं पृथक्करोति । सा कुल्या का ? तौ द्वीपसमूहौ च कौ ?
३. पूर्वभारते स्थितम् एकं नगरं अलूकटक इति निर्दिश्यते स्म, श्रेष्ठयात्रिकेण इबन् बतूतावर्येण । तस्य नगरस्य सद्यःकालीनं नाम किम् ?
४. प्रसिद्धः लेखकः रुडियार्ड् किप्लिङ्गवर्यः भारतस्य कस्मिन् नगरे जन्म प्राप्तवान् ?
५. शहाजानबाद् इति नाम कस्य महानगरस्य पूर्वतनं नाम अस्ति ?
६. अलिनापुरम् इति नाम अपरस्य कस्य महानगरस्य आसीत् ?
७. पाण्ड्यराजानां समग्रायां राजधान्यां काचित् नदी प्रवहति स्म । तस्य नगरस्य नाम किम् ? नद्याश्च नाम किम् ?
८. रामेश्वरं भारतस्य मुख्यभूमौ नास्ति । जलसन्धिः कश्चन तत् नगरं मुख्यभूमितः पृथक्करोति । तस्य जलसन्धेः नाम किम् ?

*(उत्तराणि अग्रिमे मासे)*

### 'एप्रिल्'मासस्य प्रश्नानाम् उत्तराणि

*१. १९८० तमे वर्षे रोमनगरे ।*
*२. क्रिश्चियन् मेडिकल् कालेज्, वेल्लूरु ।*
*३. 'इन् दि फ्री स्टेट्'नामकम् ।*
*४. कराचीतः, यच्च तदा भारते आसीत् ।*
*५. गोदावरी ।*
*६. अटलबिहारीवाजपेयी ।*
*७. सिंहः ।*
*८. दक्षिणगङ्गोत्री इति ।*
*९. बेगुमपेट् (हैदराबादनगरस्थम्)*
*१०. बरेन् द्वीपे, यश्च अन्दमान्-निकोबार्-द्वीपसमूहे अस्ति ।*



# उपकारबुद्धिः

सीतारामः वैद्यः तु न । किन्तु शिरोवेदनायाः निमित्तम् उत्तमस्य औषधस्य दाने सः अतिसमर्थः । गृहस्य पृष्ठतः वर्धितानि कानिचन पर्णानि अवचित्य समानतया तेषां तोलनं कृत्वा सम्यक् पेषणं करोति स्म सः । एवं सज्जीकृतं लेप्यं रोगिणः ललाटे स्थापयति स्म । दशनिमेषाभ्यन्तरे सः शिरोवेदनाग्रस्तः स्वस्थः भवति स्म । पुनः कदापि तं शिरोवेदना न बाधते स्म ।

प्रतिदिनम् एकः वा चिकित्सार्थं सीतारामसमीपम् आगच्छति स्म एव । आगतान् जनान् सः – 'तुलाम् आनयन्तु' इति आदिश्य पर्णानां सङ्ग्रहार्थं गृहस्य पृष्ठभागं गच्छति स्म । जनैः आनीतया तुलया सः पर्णानि तोलयित्वा लेप्यं सज्जीकरोति स्म ।

कृतायाः चिकित्सायाः निमित्तं सः कस्माच्चित् अपि शुल्कं न स्वीकरोति स्म । चिकित्सां प्राप्तवन्तः जनाः सहर्षं यत् यच्छन्ति स्म तत् स्वीक्रियते स्म तेन ।

सीतारामस्य गृहस्य पुरतः एव जानकीरामस्य गृहम् । तस्य परोपकारस्वभावः ग्रामे सर्वत्र प्रसिद्धः । ग्रामे कस्यचित् अपि गृहे साहाय्यस्य आवश्यकता भवति चेत् विनाह्वानं तत्र गच्छति स्म जानकीरामः ।

अवलेहानां निर्माणं विक्रयणं च जानकीरामस्य वृत्तिः । तेन निर्मितः अवलेहः रुचिपूर्णः दीर्घकालस्थायी च भवति स्म । अतः नगरे अपि तदीयस्य अवलेहस्य क्रेतारः आसन् बहवः । अवलेहनिर्माणाय ये पदार्थाः आवश्यकाः ते आदौ तोलनीयाः खलु ? तदर्थं सः तुलायाः उपयोगं करोति स्म । तस्य गृहे तुला अस्ति इति जानन्तः सीतारामगृहं प्रति चिकित्सार्थम् आगताः जनाः तदीयगृहात् एव तुलां नीत्वा, पर्णानां तोलनानन्तरम् आनीय प्रत्यर्पयन्ति स्म ।

कदाचित् सीतारामस्य मनसि विचारः आगतः – 'अहम् अपि जनसेवां करोमि चेदपि जनाः मां यावत् श्लाघन्ते ततोऽपि अधिकं

नन्दकुमारः



किमर्थं जानकीरामं श्लाघन्ते ?' इति । एषः एव भावः प्रबलः सन् जानकीरामविषये सीतारामे द्वेषम् अजनयत् ।

जानकीरामस्य विशेषाः के इति ज्ञातुम् इच्छन् सीतारामः तदर्थं प्रयत्नम् आरब्धवान् । अतः सः जानकीरामस्य सर्वान् व्यवहारान् एकैकशः सुसूक्ष्मं परिशीलयितुम् उद्युक्तः अभवत् ।

जानकीरामः हसन्मुखः आसीत् । सः कदापि कोपं न करोति स्म । अन्यस्य मनः यथा खिन्नं भवेत् तथा कदापि न व्यवहरति स्म सः । वाणिज्यविषये महती श्रद्धा आसीत् तस्य । निश्चितमूल्येन एव विक्रयणं करोति स्म सः । कदापि कस्माच्चिदपि अधिकं मूल्यं न स्वीकरोति स्म । ऋणव्यवहारः अपि तस्य कदापि न आसीत् ।

'मया सर्वेभ्यः निश्शुल्कम् औषधं दीयते सदापि । तथापि जनाः तु जानकीरामम् एव अधिकतया प्रशंसन्ति । प्रायः जनाः मम श्रेष्ठतां न जानन्ति । यदा ज्ञास्यन्ति तदा निश्चयेन मम एव प्रशंसाम् आधिक्येन करिष्यन्ति' इति अचिन्तयत् सीतारामः ।

कदाचित् सीतारामः स्वयं शिरोवेदनाग्रस्तः जातः । सः निश्चितवान् यत् मदीयस्य औषधस्य उपयोगः मया एव करणीयः इति । अतः सः पर्णानि सङ्ग्रहीतुं गृहस्य पृष्ठभागं गच्छन् पुत्रीम् अवदत् - ''भवती जानकीरामस्य गृहं गत्वा तुलाम् आनयतु'' इति ।

जानकीरामस्य गृहं गत्वा अचिरात् एव प्रत्यागता पुत्री पितरम् उक्तवती - ''मत्समीपे तुला नास्ति इति जानकीरामः अवदत्'' इति ।

''किम् अन्यस्मै दत्ता इति प्रष्टव्यम् आसीत् भवत्या'' इति पुत्रीम् अवदत् सीतारामः ।

''प्रष्टुम् इष्टवती अहमपि । तावता मया तद्गृहस्य अन्तः तदीयपत्न्या उपयुज्यमाना तुला दृष्टा । यदि ते अस्मभ्यं दातुं न इच्छेयुः तर्हि किम् अधिकप्रश्नेन इति विचिन्त्य अहं किमपि अनुक्त्वा एव ततः प्रत्यागता'' इति अवदत् पुत्री ।

''प्रायः त्वरया किमपि करणीयम् आपतितं स्यात् । अचिरात् एव प्रत्यर्पयिष्यामि इति वक्तव्यम् आसीत् भवत्या'' इति अवदत् सीतारामः ।

''तेन तुला नास्ति इति उक्तं, तुला उपयुज्यमाना अस्ति इति तु न उक्तम् । अतः मया किमपि न उक्तम् एव'' इति उक्तवती

पुत्री ।

सीतारामः चिन्तितवान् - 'सर्वेभ्यः यः सदा तुलां ददाति सः मह्यं तुलां दातुं न इच्छति । एतस्मात् सिद्धं यत् तस्य व्यवहारे कुटिलता अस्ति इति । तां कुटिलताम् अद्य सर्वत्र प्रसारयिष्यामि' इति ।

अतः सः झटिति जानकीरामस्य गृहम् अगच्छत् । तदवसरे जानकीरामः तुलया किमपि तोलयन् आसीत् ।

आगतं सीतारामं दृष्ट्वा सः अवदत् - ''आगच्छतु सीतारामवर्य ! उपविशतु तावत् । एषा तुला अवलेहवस्तुतोलने उपयुज्यमाना अस्ति । अतः मया भवतः पुत्री उक्ता - 'तुला नास्ति' इति । खेदः तु न जातः खलु भवतः ?'' इति ।

''किं खेदस्य प्रस्तावेन ? अवलेह-निर्माणावसरे तुला अपेक्ष्यते एव । परोपकारिणा भवता जनानां निमित्तम् अपरा तुला यदि क्रीता स्यात् तर्हि प्रायः समस्या न अभविष्यत्'' इति उपहासमिश्रितस्वरेण अवदत् सीतारामः ।

तदा जानकीरामः अवदत् - ''भवतः कथनात् पूर्वम् एव मया तत् कृतम् एव । मम गृहस्य पुरतः भवतः वासः यदा आरब्धः ततः आरभ्य तुलाप्रष्टॄणां सङ्ख्या प्रवृद्धा । 'तुला नास्ति' इति वक्तुम् अहं न इच्छामि स्म । तुलाभावतः मम गृहस्य कार्ये जायमानं विघ्नम् अपि न इच्छामि स्म । अतः अपरा तुला मया क्रीता एव । तां भीमः अद्य नीतवान् अस्ति'' इति ।

एतत् श्रुतवतः सीतारामस्य परमाश्चर्यं जातम् । 'परोपकारार्थम् एव एकां तुलां क्रीत्वा रक्षितवतः एतस्य प्रशंसां जनाः यत् कुर्वन्ति तत् सहजम् एव । अद्य एषः मम पुत्रीं यत् उक्तवान् 'तुला गृहे नास्ति' इति, तत् सत्यम् एव । तुला तु भीमेन नीता अस्ति' इति अचिन्तयत् सः ।

सः जानकीरामस्य श्रेष्ठताम् अङ्गीकुर्वन् अवदत् - ''जानकीरामवर्य ! उपकारबुद्धिः भवतः स्वभावः । अतः एव जनाः भवतः प्रशंसां कुर्वन्ति आधिक्येन । भवतः परोपकारबुद्धिः निश्चयेन प्रशंसार्हा'' इति ।



# बुद्धिमान् तेनालीरामः



तेनालीरामः प्रसिद्धिप्राप्तितः पूर्वं कृष्णदेवरायस्य आस्थानं तदा तदा आगच्छति स्म । एवम् आगमनसमये मुख्यद्वारपालकः तत्सहायकः च केनचित् व्याजेन तस्य प्रवेशं निवारयितुं प्रयतेते स्म ।

कदाचित् राजा प्रसिद्धनर्तक्याः नृत्यं पश्यन् आसीत् । 'केनापि कारणेन नृत्यवीक्षणे विघ्नः न करणीयः' इति आज्ञापितवान् आसीत् सः । तेनालीरामः यथापूर्वम् आस्थानं प्रति गन्तुम् आगतवान् । मुख्यद्वाररक्षकः तस्य गमनं निवार्य तं हस्तेन नुत्त्वा पातितवान् ।





'किमपि न प्रवृत्तम्' इति भावं व्यवहारेण प्रदर्शयन् तेनालीरामः उत्थाय वस्त्रस्थां धूलिं निवार्य मुख्यद्वारपालकम् अवदत् – 'अहो भवतः शरीरसौष्ठवता ! एतदर्थं भवते पुरस्कारः दातव्यः' इति । 'भवादृशाः तु आस्थाने पुनः पुनः पुरस्कारं प्राप्नुवन्ति । मां को वा पश्येत् ?' इति अवदत् मुख्यद्वारपालकः ।

'भोः, अलं चिन्तया । अन्तः प्रवेशाय मह्यम् अनुमतिं ददातु । अद्य राजा मह्यं यत् ददाति तस्य अर्धं भवते दास्यामि । भवतः सहायकाय एतस्मै अवशिष्टम् अर्धं दीयते' इति अवदत् तेनालीरामः । सन्तुष्टौ तौ तेनालीरामस्य प्रवेशाय अनुमतिं दत्तवन्तौ ।





तेनालीरामः आस्थानं प्रविश्य नृत्य-वेदिकाम् आरुह्य शीर्षासनं कृत्वा स्थितवान् । एतस्मात् नृत्यकार्यक्रमः झटिति स्थगितः । राजा क्रोधेन आज्ञापितवान् - ''कोऽयं मूर्खः सः ? सः आस्थानात् बहिः प्रेष्यताम्'' इति ।



रामः राजानं नमस्कृत्य अपृच्छत् - 'यथा कौशलं निमित्तीकृत्य नर्तकी पुरस्क्रियते तथा मम कौशलस्य अपि पुरस्कारः कुतः न क्रियते ?' इति । 'भवतः पुरस्कारः ? आं, पुरस्क्रियते भवान् यथायोग्यम्' इति उक्त्वा राजा भटं कञ्चित् आज्ञापयत् - ''शत-कशाप्रहारैः एतं पुरस्करोतु'' इति ।



''अनुगृहीतोऽस्मि महाराज ! किन्तु मया भवतः द्वारपालकाय तत्सहकारिणे च वचनं दत्तम् अस्ति यत् अद्य मया यत् प्राप्यते तस्य अर्धभागः उभाभ्यां दास्यते इति'' इति उक्त-वान् रामः । राजा किमपि न अवगतवान् । तदा तेनालीरामः प्रवृत्तं सर्वं विवृतवान् ।



राजा तौ द्वारपालकौ आनायितवान् । तेनालीरामस्य व्यवहारेण ताभ्यां यावत् प्राप्येत ततोऽपि अधिकैः कशाप्रहारैः तौ पुरस्कृतवान् सः । एतदनन्तरं कोऽपि तेनालीरामं द्वारे न अवरुणद्धि स्म ।

# ग्रीष्मकालः शीतलता च

वायुः अत्युष्णः । सः अग्निम् उद्गमति इव । एतत्कारणतः सरोवरस्य जलम् उष्णं जातम् आसीत् । जलस्य एताम् उष्णताम् असहमानः कश्चन मण्डूकः जलात् बहिः आगत्य एकां छायां प्राप्नोत् । सा च छाया फणां प्रसार्य स्थितवतः सर्पस्य ! एतत् वराकः सर्पः न जानाति स्म ।

सुर्यस्य किरणानां तापम् असहमानः अपरः सर्पः मन्दं सर्पन् एकस्य मयूरस्य समीपं गतवान् । सः तत्रैव निद्रावशंगतः श्रान्ति-कारणतः ।

एतत् वर्णनम् ऋतुसंहारस्य, यश्च कालि-दासेन विरचितः । ग्रीष्मऋतोः वर्णनं कुर्वन् सः एतादृशम् एकं दृश्यम् अस्माकं नेत्रयोः पुरतः उपस्थापयति ।



ग्रीष्मकालस्य स्मरणात् एव अस्माकं स्मृतिपथम् आयान्ति - आतपः, धूलिः, स्वेदः, नीरसता इत्यादयः । शिथिलतायाः आकरभूते एतस्मिन् ग्रीष्मकाले एव नारङ्गम्, खर्जूरम्, आम्रम्, द्राक्षा इत्यादीनि फलानि, मल्लिका-सदृशानि कुसुमानि चापि अनुगृहीतवती अस्ति प्रकृतिः ।

ग्रीष्मकालस्य तापात् आत्मनः रक्षणार्थं वयम् एषु दिनेषु वातानुकूल्यकराणां यन्त्राणां, व्यजनस्य, पयोहिमस्य, शीतलवायूत्पादकस्य यन्त्रस्य च उपयोगं कुर्मः । प्राचीने काले तु एतादृशानि साधनानि न आसन् । प्राचीन-कालीनाः तु तादृशानि गृहाणि निर्मान्ति स्म, यत्र च औष्ण्यस्य अनुभवः न स्यात् । एतदर्थं ते गृहनिर्माणकाले एव अवधानं यच्छन्ति स्म । सामान्यतः ग्रामीणजनाः कुटीरेषु निवसन्ति स्म । ते कुटीरस्य निर्माणावसरे उभयतः अपि वायुसञ्चारः निर्विघ्नतया यथा प्रचलेत् तथा व्यवस्थां कुर्वन्ति स्म । राजभवनस्य निर्माण-समये अपि एतस्य अंशस्य विषये अवधानं दीयते स्म ।

१९७२ तमे वर्षे मध्यप्रदेशे ओर्च्छाप्रदेशे मधुकरशाहस्य शासनं प्रचलति स्म । तस्य आस्थाने रायपरवीननामिका कवयित्री आसीत् । तस्याः एकं विशिष्टं भवनम् आसीत् । तत् अट्टसहितम् । विविधैः पुष्पैः फलैः च युक्तेन उद्यानेन आवृतम् आसीत् तत् । तस्य औन्नत्यम् अधिकं न आसीत् । तदीयः प्रथमः अट्टः भूमेः अन्तः आसीत् । अतः समग्रम् औष्ण्यं द्वितीये अट्टे तिष्ठति

स्म । तत्कारणतः भूमौ स्थिते अट्टे सदा शीतलता भवति स्म । 'फलबाग'नामकस्य एतस्य भवनस्य द्वितीयाट्टं परितः स्थिते उद्याने जलधारासेचनव्यवस्था आसीत् । अतः भूतलस्थम् अट्टं परितः जलबिन्दवः निरन्तरं पतन्ति स्म ।

राणा जगत्सिंहः मेवाडस्य राजा आसीत् । सः अमृतशिलाभिः एकं भवनं निर्मापितवान् आसीत् । तस्य नाम 'लोकप्रासादः' इति । एतत् भवनं सरोवरस्य मध्ये अस्ति । अतः एतस्य भवनस्य अन्तः सर्वदा शीतलता रक्षिता भवति स्म ।

ग्रीष्मतापात् रक्षणार्थम् अस्माकं देशे सिम्ला, डेहराडून्, मसूरि, राणीकेट्, उदकमण्डलम्, दार्जिलिङ्ग, महाबलेश्वरम्, नैनिताल् इत्यादीन् प्रदेशान् प्रति गम्यते । अत्र ग्रीष्मविरामस्य यापनार्थम् अपेक्षिता व्यवस्था अस्ति । वासार्थम् अतिथिगृहाणि सन्ति । पूर्वम् आङ्ग्लाधिकारिणः एतानि निर्मितवन्तः आसन् । ते तु अत्रत्यस्य तापस्य कारणतः विशेषकष्टम् अनुभवन्ति स्म । केचन विदेशीयाः ग्रीष्मकारणतः जायमानानां रोगाणां कारणतः मरणम् अपि प्राप्नुवन्ति स्म । अतः ते शीतलपर्वतप्रदेशेषु भवनानां निर्माणं कारयन्ति स्म । तत्रैव वसन्तः ग्रीष्मकालं यापयन्ति स्म ।

१८५० तः पूर्वम् अस्माकं देशे कृत्रिमहिमस्य निर्माणं न प्रचलति स्म । आङ्ग्लेयाः कृत्रिमहिमं विना स्थातुं न शक्नुवन्ति स्म । अतः ते अमेरिकातः हिमखण्डान् आनाय्य रक्षन्ति स्म । चेन्नैनगरस्य 'मरीना'समुद्रतटसमीपे कृत्रिमहिमस्य रक्षणार्थं 'ऐस् हौस्'निर्माणम् अपि कृतम् आसीत् तैः ।



राजस्थाने गुजरातराज्ये च औष्ण्यम् अत्यधिकं भवति । ४२ - ५२ सेल्सियस्तापः भवति तत्र प्रायः । अतः तत्रत्याः पुरुषाः विशालम् उष्णीषं धरन्ति ।

गुजरातराज्ये राजपरिवारः येन मार्गेण आधिक्येन सञ्चरति तस्य मार्गस्य पार्श्वे २०० पादगभीरः विशालः कूपः निर्मीयते स्म । प्रयाणावसरे पिपासानिवारणार्थम् एतस्य उपयोगः क्रियते स्म राजपरिवारीयैः जनैः । १५तम्यां शताब्द्यां बैरसिंहवाघेलनामकेन निर्मापितम् 'अडलजवाव'नामकं तु अतिप्रसिद्धम् अस्ति ।

जोधपुर-बहपुरप्रभृतिषु प्रदेशेषु गृहाणि श्वेतवर्णेन नीलवर्णेन वा अलङ्क्रियन्ते । एते वर्णाः उष्णकिरणानां तापांशस्य निवारणे समर्थाः । अतः तत्रत्येषु गृहेषु शीतलता दृश्यते स्म ।

विद्युद्व्यजनस्य आगमनात् पूर्वम् अस्माकं देशे ताडपत्रैः निर्मितानां व्यजनानाम् उपयोगः

क्रियते स्म । तानि विविधैः वर्णैः अलङ्क्रियन्ते स्म । एतस्यां कलायाम् अस्मद्देशीयाः निपुणाः एव । राजानः तु गजदन्तेन चन्दनकाष्ठेन वा निर्मितानां व्यजनानाम् उपयोगं कुर्वन्ति स्म । कालिदासः स्वग्रन्थे लिखति यत् तत्काले जनाः चन्दनरसे व्यजनानि मज्जयित्वा उपयोगं कुर्वन्ति स्म इति । आङ्ग्लाधिकारिणः शीतलवायुनिमित्तम् अपराम् एव व्यवस्थां कल्पयन्ति स्म । छदौ लम्बितं वस्त्रं कश्चन सेवकः रज्ज्वा आकर्षन् विकर्षन् भवति स्म । ततः वायुसञ्चारः भवति स्म ।

तापात् आत्मनः रक्षणार्थं पूर्वजाः विविधान् उपायान् आश्रयन्ति स्म । प्रातः सायं च गृहं परितः जलसेचनं क्रियते स्म । वातायनेषु विशालपट्टिकाभिः निर्मितानि आवरणानि निर्मीयन्ते स्म । तन्मध्ये सुगन्धप्रसारकमूलानि योज्यन्ते स्म, तानि जलेन सिच्यन्ते स्म च ।

जलं, दधि, तक्रम् इत्यादीनि नूतनेषु मृत्पात्रेषु स्थाप्यन्ते स्म, येन तानि शीतलानि भवेयुः । शिरसि एरण्डतैलस्य योजनं क्रियते स्म कैश्चित् । अन्ये केचन पाटलपुष्पस्य दलैः मधु योजयित्वा 'गुलकन्द'-नामकं लेह्यं निर्माय प्रतिदिनं सेवन्ते स्म तापनिवारणार्थम् ।

तत्कालीनपेयानां विषये किञ्चित् चिन्तयाम । गुडः, जम्बीररसः, शुण्ठी, एला इत्यादीन् मेलयित्वा पानकं निर्माय पिबन्ति स्म जनाः । एतेन शरीरे शीतलता भवति इति तेषां विश्वासः आसीत् । उत्तरभारते मधुमिश्रितस्य दध्नः सेवनं यथा प्रसिद्धं तथैव दक्षिणभारते तक्रस्य सेवनं प्रसिद्धम् ।

गुजराते आम्रैः निर्मितं 'भाल्लो' सेव्यते । बङ्गाले च बिल्वपेयं सेव्यते । गुडेन, जम्बीर-रसेन, दध्ना च संयुक्तः 'गुरिफाशरबत्'नामकं पेयं समग्रे देशे प्रसिद्धम् ।

उत्तमानि आम्रफलानि ग्रीष्मकाले उप-लभ्यन्ते । एतानि विविधोपयोगीनि । एतैः अवलेहपेयादयः निर्मीयन्ते । १६ शतके मुगलराजाः विविधजातीयान् आम्रान् वर्धयन्ति स्म ।

ग्रीष्मकाले आतपे गमनं न श्रेयस्करम् । विद्यालयबालेभ्यः ग्रीष्मकाले विरामः दीयते । विद्यालयानां पुनरारम्भः जून्मासे एव । अतः भोः, बालाः ! विरामस्य पूर्णोपयोगं चिन्तयन्तु, पुनः अग्रिमकक्ष्यार्थं गमनाय सज्जीभवन्तु च ।



# देवः राजरूपेणास्ति अत्र



केभ्यश्चित् मासेभ्यः पूर्वं वयं पठितवन्तः यत् राजा देवत्वेन पूज्यते इति । अत्र तद्भिन्ना काचित् घटना अस्ति, यत्र च देवः एव राजत्वेन पूज्यते । मध्यप्रदेशस्य ओर्चानामके स्थले स्थिते रामराजदेवस्थाने एषा परम्परा अस्ति । एतद्विषये कथा एवं श्रूयते -

१५शताब्द्यां बुन्देल-वंशीयेन मधुकरशाहेन एषः देवालयः निर्मितः । मधु-करशाहः कृष्णभक्तः । किन्तु तस्य पत्नी राज्ञी गणेशा तु रामभक्ता । कदाचित् राजा मधुकरः पत्नीम् उक्तवान् यत् कृष्णस्य विहारस्थलं वृन्दावनं प्रति गत्वा आगच्छाव इति । किन्तु राज्ञी एतत् निराकृत्य रामस्य जन्मस्थानम् अयोध्यां प्रति गन्तुम् इष्टवती । तदा तस्याः विषये कुपितः राजा ताम् आदिष्टवान् - 'एवं तर्हि भवती अयोध्यातः रामम् अत्र आनयतु' इति । 'अस्तु' इति उक्त्वा अयोध्यां गता राज्ञी वर्षं यावत् तत्रैव स्थितवती रामं ध्यायन्ती ।

एकस्यां रात्रौ तस्याः स्वप्ने प्रत्यक्षीभूय भगवान् रामः अवदत् - ''अहं भवत्या सह आगन्तुं सिद्धः । किन्तु न देवत्वेन, अपि तु राजत्वेन तत्र स्थास्यामि'' इति । राज्ञी एतत् अङ्गीकृतवती । भगवान् रामः अन्तर्हितः जातः ।

भगवतः आदेशस्य अनुगुणं मधुकरशाहः राज्ञी गणेशा च ओर्चाप्रदेशे रामराजमन्दिरं निर्मापितवन्तौ ।

देशे एतत् अद्वितीयं मन्दिरं, यत्र च भगवान् रामः राजत्वेन पूज्यते ।

# बिहारीया जानपदकथा

बिहारराज्यं भारतस्य वायव्यदिशि (उत्तर-पूर्वदिशयोः) अस्ति । 'विहार'-शब्दात् बिहारपदम् उत्पन्नम् । बौद्धमतीयानाम् आवास-स्थानम् एव विहारः इति उच्यते स्म । सहस्राधिकवर्षेभ्यः पूर्वं बिहारराज्यं बौद्ध-मतस्य केन्द्रम् आसीत् । बौद्धमतस्य संस्थापकः गौतमबुद्धः 'लुम्बिनि'प्रदेशे जातः । बोधगयायां सः ज्ञानोदयं प्राप्तवान् । तस्य निर्वाणम् अपि तस्मिन् एव स्थले जातम् । एतानि सर्वाणि स्थलानि बिहारराज्ये एव सन्ति । बिहारराज्यस्य अपरं सुप्रसिद्धं स्थानं पाटलीपुत्रम् । पाटलीपुत्रं चक्रवर्तिनः अशोकस्य राजधानी आसीत् , शैक्षणिक-धार्मिककेन्द्रं च आसीत् । इदानीं तत् नगरं 'पाटना'नाम्ना निर्दिश्यते । तत् बिहारराज्यस्य राजधानी अस्ति ।

बिहारराज्यस्य विस्तारः ९४,१२,३०० चतुर्हस्तकिलोमीटरात्मकः । देशस्य विस्तृत-राज्येषु नवमं स्थानम् एतस्य । अत्रत्या जन-सङ्ख्या ८२,८७,७९६ । जनसङ्ख्यायां एतस्य द्वितीयं स्थानं देशे । एतस्य उत्तरभागे नेपालदेशः, पश्चिमभागे उत्तरप्रदेशः, पूर्वभागे पश्चिमवङ्गराज्यम्, दक्षिणे जारखण्डराज्यं च सन्ति । (सद्योनिर्मितं राज्यं जारखण्डराज्यम्) बिहारस्य कार्यालयीयभाषा हिन्दी । किन्तु अत्र हिन्दीभाषायाः उपभाषाः बह्व्यः उप-युज्यन्ते । तासु प्रमुखाः - भोजपुरी-मैथिली-प्रभृतयः ।

## बुद्धिमान् बलवान्, मूर्खः पिशाचः च

सीतापुरे बलवान् नाम कश्चन मल्लः निवसति स्म । सः महाबुद्धिमान् अपि । उत्तममल्लत्वेन तस्य ख्यातिः आसीत् समग्रे जनपदे । अन्यजनपदेषु स्थिताः मल्लाः अपि तं जेतुं न शक्तवन्तः । अतः तस्य ख्यातिः इतोऽपि विस्तृता जाता । कदाचित् ग्रामीणाः सर्वे सुखसंल्लापार्थं सम्मिलिताः आसन् । तदा वार्तालापमध्ये प्रसङ्गवशात् बलवान् अवदत् - ''कस्माच्चित् अपि नास्ति भीतिः मम । राक्षसाः पिशाचाः वा मां भाययितुं नार्हन्ति'' इति ।



तदा ग्रामीणेषु कश्चन अपृच्छत् - "पिशाचेभ्यः अपि किं भीतिः नास्ति भवतः ? एवं तर्हि भवान् पाणीगञ्जखाते सञ्चरतः पिशाचान् सम्मुखीकर्तुं किं शक्नुयात् ?" इति ।

तत् श्रुत्वा बलवान् अवदत् - "स च प्रदेशः सुपरिचितः मम । किन्तु तत्र कदापि कोऽपि पिशाचः न दृष्टः" इति ।

तदा वृद्धः कश्चन विवृतवान् - "तानपुर-रामपुरयोः मार्गौ पाणिगञ्जप्रदेशे मिलतः खलु ? ततोऽपि अग्रे मार्गः नितरां कष्टकरः । तत्र खाताः सुरङ्गाश्च अति-क्रमणीयाः भवन्ति । मार्गोऽपि कण्टक-मयः । मार्गम् उभयतः महाशिलाः सन्ति । ताः यदाकदाचिदपि यात्रिकाणाम् उपरि पतितुम् अर्हन्ति । एतत्सर्वं दृष्ट्वा जनाः उक्तवन्तः स्युः यत् तत्र पिशाचाः वसन्ति इति" इति ।



"महाशिलानां स्थितिः, मार्गाणां कण्टकमयता वा मम पीडायै न भवन्ति । अहं विनाक्लेशं गन्तुं शक्नोमि तेन मार्गेण" इति अवदत् बलवान् ।

"भवता तत्रत्या कथा पूर्वतया न श्रुता एतावता । तत्रत्या विपत् न प्राकृतिकी, अपि तु अतिप्रकृतिशक्तिसम्बद्धा । तत्र ये गच्छन्ति तान् मारयित्वा तेषां रक्तं पीत्वा मांसं खादिष्यन्ति तत्रत्याः पिशाचाः । यात्रिकाणां सकाशे स्थितं धनकनकादिकं नेष्यन्ति अपि ते" इति अवदत् कश्चन फलविक्रेता ।

"अन्यच्च ते पिशाचाः कामरूपिणः । यत् रूपम् इष्यते तत् धर्तुं शक्ताः ते । अतः तेषाम् अभिज्ञानम् अपि नितरां कष्टकरम्" इति अवदत् कश्चन घटविक्रेता ।

"एताः सर्वाः किंवदन्त्यः । अहं तं खनीप्रदेशं गत्वा तैः पिशाचैः सह युद्धं कृत्वा तान् पराजेष्यामि । येन सह अहं युद्धं करोमि तस्य लक्षणादिविवरणमपि आनेष्यामि । यम् आदौ पश्यामि तं मूर्खं करिष्यामि" इति साभिमानम् अवदत् बलवान् ।

अनन्तरदिने एव सः तं खातं प्रति प्रस्थितः । तदा काचित् वृद्धा तस्य समीपम् आगत्य 'दीर्घायुष्मान् भव । विजयी भव' इति आशिषा अनुगृह्य अवदत् - "भगवदनुग्रहेण विना विघ्नं भवान् प्रत्यागमिष्यति । गमनसमये एतत् अण्डं, लवणग्रन्थिं च आत्मना सह नयतु । कष्टकाले एतदुभयं भवतः साहाय्यं करिष्यति" इति ।

यदा सः खातप्रदेशं प्राप्तवान् तदा पृष्ठभागतः स्वरः श्रुतः - "भोः, बलवन्महोदय ! कथम् अत्र उपस्थितिः भवतः ? एषोऽहं भवतः मित्रं गब्बरः । आगच्छतु, वार्तालापेन कञ्चन कालं यापयाव" इति ।

बलवान् झटिति एव ज्ञातवान् यत् एषः कश्चन

पिशाचः एव इति । सः अवदत् - ''मित्र ! गब्बर ! कुत्रास्ति भवान् ? भवन्तम् अहं न पश्यामि खलु !'' इति ।

तदा पिशाचः झटिति गब्बरस्य आकारं प्राप्य बलवतः पुरतः प्रत्यक्षः जातः ।

तं दृष्ट्वा बलवान् अवदत् - ''अये पिशाच ! गब्बररूपं धृतं चेत् मया वस्तुस्थितिः न ज्ञायते इति वा भवतः चिन्तनम् ? भवान् गब्बरः न इति क्षणमात्रेण ज्ञातं मया । मया किमर्थम् आगतम् इति किं भवान् जानाति ?'' इति ।

पिशाचः आश्चर्यचकितः । अद्यावधि कोऽपि मानवः तम् एवं न उक्तवान् आसीत् । सः बलवन्तम् अपृच्छत् - ''किमर्थं भवता आगतम् इति मया कथं ज्ञातुं शक्येत ?'' इति ।

''अहो, भवान् मूर्खः पिशाचः । मानवानां मनसि स्थितं ज्ञातुम् अशक्नुवन् भवान् निश्चयेन मन्दमतिः एव । तदस्तु, मम आगमनकारणं शृणोतु । अहम् अस्मि प्रसिद्धः मल्लवीरः । धेनुखादकाः मकराः मारिताः मया । मानवहन्ता सिंहः एव मया दासीकृतः । इदानीम् अहं कांश्चन पिशाचान् पराजेतुं वशीकर्तुं च इच्छामि'' इति गर्वेण अवदत् बलवान् ।

तदा पिशाचः तं नखशिखान्तं दृष्ट्वा अवदत् - ''किन्तु भवान् तादृशः बलवान् इति न भाति !'' इति ।

तत् श्रुत्वा बलवान् - ''बाह्यरूपम् अन्यत्, अन्तस्सत्त्वं च अन्यत् । भवान् आत्मानम् एव परिशीलयतु । भवान् गब्बरः इव दृश्यते, किन्तु वस्तुतः गब्बरः न भवान् । अहम् अपि तादृशः एव । तदस्तु, एतं शिलाखण्डं स्वीकरोतु । एतत् शुष्कम् इव भासते खलु । एतस्मात् रसः पातनीयः भवता । किम् एतत् शक्यते ?'' इति वदन् भूमिस्थम् एकं शिलाखण्डम् उन्नीय दत्तवान् ।

पिशाचः तं शिलाखण्डं गृहीत्वा बलात् निष्पीडितवान् । किन्तु शिलाखण्डतः कोऽपि

## नलन्दाविश्वविद्यालयः

नलन्दाविश्वविद्यालयः क्रि.पु. पञ्चमे शतके आसीत् । एषः गुप्तवंशीयैः राजभिः संस्थापितः । एषः प्रमुखं विद्याकेन्द्रम् आसीत् तत्काले । तत्र महायानहीनयानरूपस्य बौद्धसिद्धान्तस्य अध्ययनं तु प्राधान्येन प्रचलति स्म एव । तेनैव सह वेदाः, हेतुविद्या (तर्कशास्त्रम्), शब्दविद्या, (व्याकरणम्), चिकित्साविद्या (आयुर्वेदः) इत्यादीनाम् अपि अध्ययनं प्रचलति स्म । तस्मिन् विश्वविद्यालये सहस्रशः अध्यापकाः छात्राः च आसन् । देशविदेशीयान् सर्वान् आकर्षति स्म सः विश्वविद्यालयः । तत्र अध्यननं कृतवत्सु प्रख्यातेषु अन्यतमः अस्ति चीनादेशीयः यात्रिकः ह्युयेन् त्साङ्गः । चक्रवर्तिना हर्षवर्धनेन, पालववंशीयैः राजभिः च एषः विश्वविद्यालयः पोष्यते स्म ।



रसः न निर्गतः । ''इतः रसनिस्सारणं सर्वथा असाध्यम्'' इति अवदत् पिशाचः ।

बलवान् तं शिलाखण्डं स्वीकृत्य उपायेन कोषे स्थापयित्वा कोषतः अण्डं स्वीकृत्य हस्तेन गृह्णन् अवदत् - ''एवं तर्हि अत्र पश्यतु । अहं शिलाखण्डं निष्पीडयामि । तदा भवान् रसस्य पतनं द्रष्टुं शक्नोति'' इति । तेन कृतं पिशाचेन न ज्ञातम् एव ।

अनन्तरं सः हस्ताभ्यां अण्डं निष्पीडितवान् । तदा तस्य अङ्गुलीनां मध्यतः निर्गतः रसः बिन्दुरूपेण भूमौ अपतत् । एतत् दृष्ट्वा पिशाचः आश्चर्यचकितः । सः निर्निमेषदृष्ट्या पश्यन् अतिष्ठत् । तदवसरे एव बलवान् कोषतः लवणग्रन्थिं हस्तेन गृहीतवान् ।

ततः सः अपरं शिलाखण्डम् उन्नीय दर्शयन् - ''किं भवान् एतं लघुशिलाखण्डं चूर्णीकृत्य लवणरूपेण परिवर्तयितुं शक्नुयात् ?'' इति अपृच्छत् ।

''सर्वथा असाध्यम् एतत्'' अवदत् पिशाचः ।

''अहो, लज्जास्पदम् एतत् ! यदि भवान् मत्समः स्यात् तर्हि भवता सह मल्लयुद्धं करणीयम् इति अहं चिन्तितवान् आसम्'' इति वदन् बलवान् स्वस्य करौ योजयित्वा चूर्णीकरणम् अभिनयन् उपायेन शिलाखण्डं कोषे पातितवान् । ततः हस्तस्थं लवणचूर्णं प्रदर्शयन् सः अवदत् - ''एतत् पश्यतु लवणम् ! रुचिम् आस्वाद्य परीक्षितुम् अर्हति भवान्'' इति ।

पिशाचः आस्वादनेन तस्य लवणत्वं दृढीकृत्य अचिन्तयत् - 'एषः सामान्यः मनुष्यः न' इति ।

तदा बलवान् अवदत् - ''अहं भवन्तं मम ग्रामं नेतुम् इच्छामि । मद्ग्रामीणाः अद्यावधि कमपि पिशाचं न दृष्टवन्तः । किं भवान् मया सह आगच्छेत् ?'' इति ।

पिशाचः अचिन्तयत् - 'एषः अपायकारी



मनुष्यः कथञ्चित् मम गृहं नीत्वा शिरोभञ्जन-पूर्वकं मारणीयः' इति ।

अतः सः बलवन्तम् अवदत् - ''मया सह अन्ये अपि बहवः भवतः ग्रामम् आगन्तुम् इच्छेयुः । अतः अद्य रात्रौ भवान् मया सह मम गुहाम् आगत्य किञ्चित् विश्रान्तिसुखम् अनुभवतु । श्वः अन्यैः सर्वैः पिशाचैः सह भवतः गृहं गच्छाम । अद्य भवतः सत्कारभाग्यं मम भवतु'' इति ।

''भवतु । तत्र किमपि कुतन्त्रं कर्तुं प्रयासः न करणीयः भवता । स्मरतु, शिलाखण्डे लवणांशं द्रष्टुं समर्थः अस्मि अहम् । भवतः मनसि यद्यत् भासते तत्सर्वम् अवगन्तुम् अहं शक्नोमि एव'' अवदत् बलवान् ।

''मया ऋजुव्यवहारः एव क्रियते । भवतः अहितं किमपि न चिन्त्यते'' इति वचनं दत्तं पिशाचेन । ततः तौ पिशाचवसतिं गुहां गतवन्तौ । तत्र यात्रिकेभ्यः प्राप्ता अपारा सम्पत्तिः राशीकृता आसीत् । तत्र बहूनि अस्थिपञ्जराणि अपि दृष्टानि । 'एतेषाम् आहारतां प्राप्तवतां जनानाम्

## करकौशलवस्तूनि

बिहारीयाणि करकौशलवस्तूनि नितरां प्रसिद्धानि । शिला, काष्ठं, चर्म, धातवः, काचकानि इत्यादीनि कारकौशलवस्तूनां निर्माणार्थम् उपयुज्यन्ते प्रायः ।

बिहारीयासु प्रसिद्धासु जानपदकलाशैलीषु अतिप्रसिद्धा अस्ति मधुबनीशैछली । एतया शैल्या चित्ररचने प्रायः महिलाः एव सुनिपुणाः । ताः स्वगृहस्य भित्तिषु अङ्गणेषु च एतया एव शैल्या विविधानि चित्राणि रचयन्ति । एतेषां मधुबनीशैलीयचित्राणां विषयाः प्रायः धार्मिककथासम्बद्धाः । एतेषां चित्राणां निमित्तं ये वर्णाः उपयुज्यन्ते ते प्रायः प्राकृतिकाः । तन्नाम सस्येभ्यः प्राप्ताः, शिलाभिः निर्मिताः वा ।



अस्थीनि स्युः एतानि' इति अचिन्तयत् बलवान् ।

गुहायां बलवतः विषये आदरपूर्णः व्यवहारः दर्शितः पिशाचेन । यदा तेन भोजनदानार्थम् उद्युक्तं तदा बलवता उक्तम् - ''मया दिने एकवारम् एव भोजनं क्रियते । प्रस्थानात् पूर्वं मम भोजनं समाप्तम् । भवतः सन्तोषार्थम् अहं किञ्चित् पृथुकं खादामि'' इति ।

तदा पिशाचः अवदत् - ''अहं पाकार्थं काष्ठानि आनेतुं गच्छामि । मम प्रत्यागमनात् पूर्वम् एतत् भाण्डं नीत्वा अनतिदूरे स्थितायाः झरीतः जलम् आनयतु'' इति ।

बलवान् तत् भाण्डम् अपश्यत् । तत् सुमहत् आसीत् । मृगचर्मादिभिः सज्जीकृतम् आसीत् तत् । 'एतत् यदा रिक्तं भवति तदा अपि अहम् उन्नेतुं न शक्नुयाम् । एवं स्थिते पूर्णायाः उन्नयनस्य का कथा ? अतः मया जलानयनाय अपरः एव उपायः अन्वेष्टव्यः' इति अचिन्तयत् सः ।

अतः सः बहिः गत्वा झरीतः गुहाद्वारपर्यन्तं कुल्यानिर्माणे उद्युक्तः । काष्ठसङ्ग्रहणकार्यं समाप्य प्रत्यागतः पिशाचः तस्य एतत् कार्यं दृष्ट्वा कोपेन अपृच्छत् - ''जलम् आनयतु इति एतावन्मात्रम् एव उक्तं मया । किन्तु भवता किम् एतत् क्रियते !'' इति ।

''जलानयनकार्यम् एव क्रियते मया । दशभाण्डपरिमितम् अपि जलम् आनेतुम् अहं शक्तः एव । किन्तु मया चिन्तितम् - 'इतः निर्गमनात् पूर्वं शाश्वतव्यवस्थां कृत्वा गन्तव्यम्' इति । यतः सुचारुतया भवता मम सत्कारः कृतः खलु ? अतः झरीतः गुहाद्वारपर्यन्तं कुल्यां निर्मान् अस्मि'' इति अवदत् बलवान् ।

'एतस्य मारणार्थं मया कृतः उपायः विफलः जातः' इति विचिन्त्य पिशाचः अवदत् - ''अलम् अतिमात्रेण शरीरपीडनेन । एतत् कार्यम् अहम् एव करिष्यामि श्वः परश्वः वा । इदानीं भवान् भोजनार्थम् आगच्छतु । भुक्त्वा निद्रासुखम् अनुभवतु'' इति ।

'एवं कथयतः पिशाचस्य उद्देशः प्रायः अन्यः एव स्यात्' इति अचिन्तयत् बलवान् ।

भोजनस्य अनन्तरं तौ शायनार्थं गतौ । शयन-समनन्तरम् एव पिशाचः निद्रामग्नः जातः । बलवान् विनाशब्दम् उत्थाय उपधानं शय्यामध्ये निधाय आच्छादकेन आच्छाद्य कुत्रापि निलीय स्थितवान् ।

उषःकाले पिशाचः जागरितः । सः बलवतः शय्यायाः समीपं गत्वा हस्तेन बलात् प्रहृतवान् । तदा अल्पोऽपि क्रन्दनशब्दः न श्रुतः । 'बलवतः मरणं भवेत् एव' इति निश्चित्य सः पुनरपि षड्वारं प्रहृत्य स्वशय्यां गत्वा सुप्तवान् ।

तत्समनन्तरम् एव बलवान् स्वशय्यायाम् उपविश्य अवदत् - ''मित्र ! भवतः गृहे मत्कुणपीडा अत्यधिका इति मन्ये । सप्त मत्कुणाः माम् अदशन् इदमिदानीम् एव'' इति ।

एतत् श्रुत्वा पिशाचः नितराम् आश्चर्य-चकितः । 'यः मृतः एव इति मया भावितम् आसीत् सः सजीवं तिष्ठन् भाषते । तावदेव न, वज्राघासदृशं मम हस्तप्रहारं मत्कुणदंशनं मन्यते ! एतादृशस्य सहवासः यदि स्यात् तर्हि अस्माकं पिशाचकुलम् एव विनश्येत्' इति चिन्तयन् सः पिशाचः अन्यैः पिशाचैः सह तां गुहाम् एव परित्यज्य कुत्रापि अगच्छत् ।

बलवान् रामपुरं गत्वा कांश्चन अश्वान् भाटकरूपेण स्वीकृत्य गुहास्थम् ऐश्वर्यं स्वग्रामम् अनयत् । तस्य कश्चित् भागं सः तस्यै वृद्धायै दत्तवान्, या च प्रस्थानसमये अण्डं लवणं च दत्त्वा उपकृतवती आसीत् ।

बलवान् ग्रामीणानां पुरतः पिशाचानां लक्षणादिकम् अवर्णयत् । खाते आदौ एव मूर्खपिशाचस्य मेलनं कारितवते भगवते अनन्त-प्रणामान् च समर्पितवान् ।



## दर्शनयोग्यानि स्थलानि

बोधगया तु सर्वैः ज्ञायते एव, यत्र च भगवान् बुद्धः ज्ञानोदयं प्राप्तवान् । यस्य अधः सः ध्यानं कृतवान् सः वृक्षः उच्यते - 'बोधिवृक्षः' । देवालयः, भूगर्भशास्त्रीय-वस्तुसङ्ग्रहालयः च तत्र दर्शनयोग्येषु अन्यतमौ ।

अन्यत् दर्शनयोग्यं स्थलं राजगृहं (राजगिर्) नाम । पर्वतैः अरण्यैः च आवृतम् अस्ति एतत् । ज्ञानोदयस्य अनन्तरं भगवान् बुद्धः पञ्च वर्षाणि अत्र यापितवान् इति श्रूयते । राजगृहं परितः स्थितेषु पर्वतेषु २४ तीर्थङ्कराः तपः आचरितवन्तः । अतः एतत् स्थलं जैनानां कृते अपि अतिपवित्रम् एव ।

# वार्ताविशेषः

## दर्पणः तारकः जातः

लखनौनगरस्य प्राणिसङ्ग्रहालयस्य अधिकारिणः चिन्ताक्रान्ताः । यतः सन्नी चीना च गम्भीरवदनौ जातौ आस्ताम् । तौ मन्दहासं न प्रकटयतः स्म । तौ तु चिम्पाञ्जीजातीयौ । स्वजातीयाः अन्ये केऽपि न सन्ति इत्येतदेव तयोः मन्दहासराहित्यस्य प्रमुखं कारणम् आसीत् ।



व्यवस्थापकाः एतस्य परिहारार्थं बहुधा विचिन्त्य एकम् उपायं चिन्तितवन्तः । ते एकं महादर्पणम् आनीय तयोः वसतेः समीपे स्थापितवन्तः । यदि तौ शिरः चालयतः तर्हि दर्पणे अपि शिरश्चालनं दृश्यते ! यदि पादः उन्नीयते तर्हि दर्पणे अपि पादस्य उन्नयनं दृश्यते ! एतस्मात् तयोः मुखे मन्दहासः उत्पन्नः । अतः अधिकारिणां ललाटे उत्पन्नाः चिन्तारेखाः अपि अपगताः अभवन् । इदानीं प्रेक्षकाः तत्र स्मितवदनौ चीनासन्निनामकौ द्रष्टुं शक्नुतः ।

## मित्रम्, उत मृत्युः ?



ब्रिटिश्कोलम्बियास्थे केलोन्नाप्रदेशे स्थितः कश्चन परिवारः ५ मीटर्दीर्घम् अजगरं स्वगृहे पालयति । तस्मिन् गृहे नव बालकाः वसन्ति । कनिष्ठस्य वयः इदानीम् अस्ति ५ वर्षाणि । अजगरस्य नाम अस्ति 'बोज्' इति । तद्देशीयः बालक्षेमविभागः चिन्तयति यत् अजगरतः बालानाम् अपायः स्यात् कदाचित् इति । किन्तु परिवारस्वामी कूप् वदति यत् बोजः मैत्रीशीलः अनपायकरः च इति । शालाबालकाः बहवः तस्य गृहम् आगत्य बोजेन सह मैत्र्या व्यवहरन्ति विना भीतिम् ।



# विघ्नेश्वरः

पार्वती क्षणाभ्यन्तरे स्वस्य दुःखं विस्मृतवती। शिवः हस्तौ प्रसार्य शिशुम् आहूतवान्। विघ्नेश्वरः मन्दं पदानि निक्षिपन् शिवस्य समीपं गतवान्।

"पुत्र, विघ्नेश्वर ! भवन्तं पुत्ररूपेण प्राप्य आवां धन्यौ जातौ। चिरं जीवतु वत्स" इति वदन् प्रीत्या गणेशं चुम्बितवान् शिवः।

तदा विघ्नेश्वरः झटिति कूर्दनं कृत्वा - "पितः, किं वदति भवान् ? अहं तु भवतः पुत्रः। अतः अहम् आत्मानं धन्यं मन्ये" इति वदन् स्वस्य शुण्डां प्रसार्य पार्वती-परमेश्वरयोः चरणस्पर्शं कृतवान्। तया शुण्डया स्वनेत्रे स्पृष्ट्वा प्रणामं कृतवान्। ततः परं सः विष्णुं नमस्कृतवान्।

तदा विष्णुः - "भागिनेय ! आगच्छतु अत्र" इति उक्त्वा तं समीपे स्वीकृत्य 'मङ्गलम् अस्तु' इति आशीर्वादं कृतवान्।

अनन्तरं विनायकः ब्रह्माणं नमस्कृतवान्। ब्रह्मा प्रीत्या तस्य कपोलौ स्पृशन् - "हे गणपते ! भवान् सर्वेभ्यः प्रथमपूजां प्राप्नोतु" इति आशीर्वादं कृतवान्।

पश्चात् विघ्नेश्वरः लक्ष्मीं सरस्वतीं च नमस्कृतवान्। उभे अपि विघ्नेश्वरम् अङ्के उपवेशितवत्यौ। तदा सरस्वती पार्वतीं दृष्ट्वा - "पुत्रेण गणपतिना पूर्वम् एव उक्तम् अस्ति यत् वयं तिस्रः मातरः अपि सहोदर्यः एव इति। अनन्तरं वयं पार्थक्येन अवतारं गृहीतवत्यः। सागरात् लक्ष्मीः, ब्रह्मणः जिह्वातः अहम्, प्रथमदक्षतः सतीदेवीरूपेण भवती च अवतारं प्राप्तवत्यः। विद्यावतीनामिका



बुद्धिः विघ्नेश्वरस्य पत्नी भविष्यति । इतःपरं अस्माभिः विघ्नेश्वरस्य विवाहवैभवं द्रष्टव्यम् अस्ति'' इति उक्तवती ।

सरस्वत्याः वचनं श्रुत्वा लक्ष्मीः - लक्ष्मीकरे विघ्नेश्वरे ये विश्वसन्ति तेषु अहं स्थिरतया वासं करिष्यामि । या अग्रे विघ्नेश्वरस्य पत्नी भविष्यति सा सिद्धिस्वरूपिणी जयलक्ष्मीः मम अंशात् एव उद्भूता अस्ति'' इति उक्तवती ।

तदा सरस्वती - ''विघ्नेश्वरः ज्ञानप्रदाता, विज्ञानदायकः चापि । अतः वर्णमालायाः अभ्यासात् पूर्वं बालानां द्वारा हरिद्रया पिण्डनिर्माणं कारणीयम् । तत् पिण्डम् विघ्नेश्वरं मत्वा पूजां कारयित्वा 'ॐ नमः' इति लेखनीयम् । मम अंशात् उद्भूता विद्यावती बुद्धिरूपिणी अस्ति । सा अपि विनायकस्य पत्नी भविष्यति'' इति उक्तवती ।

एतत् श्रुत्वा विघ्नेश्वरः मुग्धतां प्रदर्शयन् सर्वान् अवलोक्य - ''भवन्तः पश्यन्तः सन्ति खलु 'ज्येष्ठानां व्यवहारः कथम् अस्ति' इति । विवाहं कृत्वा कष्टम् अनुभवन्त्यः एताः तादृशानि कष्टानि मया अपि अनुभवितव्यानि इति उद्देशेन मम विवाहविषये त्वरन्ते । मां सुखेन स्थातुं न त्यजन्ति एताः । पुत्राणां विवाहविषये मातॄणां त्वरा तु किञ्चित् अधिका एव'' इति उक्तवान् ।

विघ्नेश्वरस्य वचनानि श्रुत्वा विष्णुः - ''भो ! वत्स । विषयः तथा नास्ति । अष्टैश्वर्यकारिकाः अणिमादयः अष्टसिद्धयः सुन्दरनक्षत्राणां रूपं धृत्वा पूर्णचन्द्रस्य सेवां यथा कुर्वत्यः सन्ति तथा भवतः अपि सेवां कुर्वन्तु इति अस्माकम् इच्छा । अचिरात् एव ताभिः सेव्यमानं भवन्तं द्रष्टुम् इच्छामः वयम् '' इति उक्तवान् ।

तदा विघ्नेश्वरः - ''एवम् ? तर्हि भवान् कृष्णावतारसमये अष्टमहिषीभिः सह कष्टं सहमानः आनन्दम् अनुभवतु कामम्'' इति उक्तवान् ।

तदा विष्णुः मन्दहासपूर्वकं - ''भवता उक्तम् अवितथम् एव भविष्यति । किन्तु भवता तु दश वध्वः परिणेतव्याः भविष्यन्ति'' इति उक्तवान् ।

उत्तररूपेण विघ्नेश्वरः - ''विघ्नेश्वरस्य विवाहे सहस्रं विघ्नाः इति उक्तिः एव अस्ति । एवं स्थिते मम विवाहः कथं सम्पद्येत'' इति उक्तवान् ।

तदा ब्रह्मा - ''सहस्रशः न, कोटिशः विघ्नाः उत्पन्नाः चेदपि भवतः विवाहः

भविष्यत्येव'' इति उक्तवान् । तत्र विद्यमानाः सर्वेऽपि ब्रह्मणः वचनम् अनुमोदितवन्तः ।

तदा नारदः अग्रे आगत्य - ''हे विघ्नेश्वर ! विवाहात् आत्मनः रक्षणम् असाध्यम् । ज्येष्ठाः वदन्ति यत् विवाहः कर्तव्यनिर्वहणं च पुरुषाणां लक्षणम् इति । एतत् सत्यं पुरस्कृत्य एव पुरुषोत्तमः आदिदेवताः च विवाहं कृत्वा सृष्टि-स्थिति-लयादिकर्तव्यं निर्वहन्तः सन्ति । एवं स्थिते का स्थितिः आवयोः ?'' इति उक्तवान् ।

उत्तररूपेण विघ्नेश्वरः हसन् - ''एवम् ? विवाहविषये भवान् अपि आसक्तः जातः अस्ति इति भाति । स्वयंवरेषु अपि किं भागं वहन् अस्ति भवान् ?'' इति पृष्टवान् ।



तदा नारदः - ''अहम् आत्मानं त्रिकाल-वेदिनं भावयामि स्म । किन्तु भवान् तु अनन्तकालवेदी अस्ति । आवाम् उभौ अपि सम्भाषणचतुरौ । तर्कं कुर्वन्तौ भवावः चेत् एषः अनन्तः कालः अपि अपर्याप्तः स्यात् । भवान् तु पूर्णज्ञानी अस्ति । मादृशः अर्धज्ञानी कदाचित् मूर्खतां प्रदर्शयेत् । तदस्तु, सिद्धिः, बुद्धिः, अष्टसिद्धयः च भवन्तं वरिष्यन्ति । अतः मम मुखतः अपि श्रीरस्तु, शुभमस्तु इत्यादयः एव शब्दाः निस्सरन्तु तावत्'' इति वदन् नारदः स्वस्य 'महती'नामिकां वीणां वादयन् कल्याणीरागस्य आलापनं कृत्वा अन्ते मङ्गलगीतम् उक्तवान् । अनन्तरं सर्वेऽपि देवाः स्वनिवासं प्रति गतवन्तः । ततः शिवः पार्वत्या, गणेशेन च सह कैलासं गतवान् । नारदश्च वज्रदन्तस्य समीपं गतवान् ।

केभ्यश्चित् दिनेभ्यः पूर्वं गणपतिः वज्रदन्तस्य पुच्छं गृहीत्वा क्षिप्तवान् आसीत् । अधःपतनकारणतः वज्रदन्तस्य शरीरं क्षत-ग्रस्तम् आसीत् । सः अनन्तरकालेऽपि वेदनां सहमानः आसीत् । वज्रदन्तस्य पत्नी धवला पत्युः सेवायां निरता आसीत् । सा नारदं दृष्ट्वा - 'एषः महाशयः पुनः कीदृशे कष्टे अस्मान् पातयिष्यति इति न ज्ञायते' इति चिन्तयन्ती अन्तः गतवती ।

नारदः मूषकासुरं वज्रदन्तम् उद्दिश्य - ''यः भवतः अवमाननं कृतवान् सः गणपतिः इदानीं विघ्नेश्वररूपेण शोभमानः अस्ति'' इति उक्तवान् ।

अवमानकारणतः क्रोधाग्निना तप्तः वज्र-दन्तः आश्चर्यचकितः सन् - ''आर्य ! मया इदानीं किं करणीयम् इति भवान् एव उपदिशतु'' इति प्रार्थितवान् ।

तदा नारदः - ''वज्रं वज्रेणैव छेत्तव्यम् ।



अतः प्रतीकारं साधयतु । गणपतिः इदानीं 'विघ्नेश्वरः' इति नाम धृतवान् अस्ति'' इति उक्त्वा ततः निर्गतवान् ।

तत् श्रुत्वा महश्वेताख्या धवला 'विघ्नेश्वरस्य सहवासः मास्तु' इति वज्रदन्तं बहुधा निवेदितवती । तथापि वज्रदन्तः पत्न्याः वचनं न लक्षितवान् एव । ''महाश्वेते, भवत्याः सौभाग्यस्य कारणतः मम मरणभयं तु नास्ति । जातस्य अवमाननस्य प्रतीकारः कृतः चेदेव मम तृप्तिः'' इति उक्त्वा ततः निर्गतः वज्रदन्तः उग्रं तपः आचर्य ब्रह्माणं प्रसन्नं कृतवान् । ब्रह्मा पृष्टवान् - ''भवान् अन्यत् किम् इच्छति ?'' इति ।

तदा मूषकासुरः - ''विघ्नाय किमपि रूपं दत्त्वा तं मम आज्ञानुवर्तिनं करोतु'' इति उक्तवान् ।

ब्रह्मा विघ्नस्य आवाहनं कृत्वा वज्रदन्तस्य पुरतः उपस्थापितवान् । किन्तु वज्रदन्तेन किमपि न अदृश्यत । तदा ब्रह्मा तस्मै सूक्ष्मदर्शनार्थं दृष्टिं दत्तवान् । सामान्यनेत्राभ्यां यत् द्रष्टुं न शक्यं तादृशं विघ्नस्य रूपं वज्रदन्तः द्रष्टुं शक्तवान् ।

मूषकासुरः आश्चर्येण अपृच्छत् - ''भगवन् ! किम् एतत् ? एतं स्वीकृत्य अहं किं करवाणि ?'' इति ।

तदा ब्रह्मा मन्दहासपूर्वकं - ''विघ्नबीजं सामान्यनेत्राभ्यां द्रष्टुम् अशक्यम् । सूक्ष्मः अणुः इव अस्ति तत् । यथा सूक्ष्मजन्तुः भयङ्करं रोगं प्रसारयितुं शक्नोति तथा अनर्थदायकः विघ्नः लघुः चेत् अपि भीषणाकारं धृत्वा सर्वनाशं कर्तुं शक्नोति । कामरूपी सः । इष्टं रूपं धृत्वा अनर्थस्य उत्पादनम् एव तस्य कार्यम् । भवान् इतःपरं यत् इच्छति तत् कर्तुं शक्नोति'' इति उक्तवान् ।

मूषकासुरः विघ्नम् आदिष्टवान् - ''भवान् गजासुरस्य रूपं धृत्वा विघ्नेश्वरस्य नाशं करोतु'' इति ।

तदा विघ्नः भयङ्करस्य गजासुरस्य रूपं धृत्वा हस्तेन खड्गं चालयन् आकाशं प्रति उड्डयनं कृतवान् ।

अपरत्र कैलासे विघ्नेश्वरः मातापित्रोः प्रीत्या वर्धमानः आसीत् । मातापित्रोः अनुमतिं स्वीकृत्य विश्वकर्मद्वारा निर्मिते भवने वासम् आरब्धवान् सः । कदाचित् पुरतः आगतः कामदेवः शरीरं धृत्वा गणपतेः पुरतः स्थितवान् । विघ्नेश्वरः आश्चर्येण - ''भवान् तु निराकारः । कथं भवान् शरीरं धृत्वा मम पुरतः उपस्थितः अस्ति ? कः विशेषः ?



अहं मुग्धः । भवतः धनुर्विद्यायाः प्रयोगं मम उपरि न करोतु'' इति उक्तवान् ।

कामदेवः विनयपूर्वकं शिरः अवनमय्य – ''गजानन ! भवान् तु मम बाणातीतः । यदि कस्यचित् पुरतः अहम् उपस्थातुम् इच्छामि तर्हि मया शरीरधारणं कर्तुं सामर्थ्यं प्राप्यते । परशिवेन एव तादृशः वरः मह्यं प्रदत्तः अस्ति । आवयोः शरीरस्य आकृत्यां काचित् समानता वर्तते । आवां निकटवर्तिनौ अपि । अतः भवान् मां द्रष्टुं शक्तवान् । एषः एव विशेषः । भवान् वृषभवाहनस्य शिवस्य पुत्रः चेत् अहं गरुडवाहनस्य विष्णोः पुत्रः । मां शिवः भस्मीकृतवान् । सः एव भवतः शिरः अपि कर्तयित्वा भवन्तम् उज्जीवितवान् । मम वाहनं शुकः । भवतः वाहनं मूषिकः । मनसः विचलने समर्थाः पुष्पबाणाः मम आयुधानि । मनसः नियन्त्रणे समर्थौ पाशाङ्कुशौ भवतः आयुधे । भवतः अनुजस्य कुमारस्वामिनः अवतारः अग्रे भवेत् खलु । पार्वतीपरमेश्वरयोः अनुरागस्य तेजः एव कुमारस्वामिरूपेण अवतारं ग्रहीष्यति । तारकासुरस्य संहारः अग्रे भवेत् । अतः एव देवाः मां भस्मीकारितवन्तः । अहं कैलासं गच्छन् अस्मि । अनुज्ञा दीयताम्'' इति उक्तवान् ।

विघ्नेश्वरः उत्तररूपेण – ''कामदेव, अहं तदर्थमेव कैलासतः दूरं गच्छन् अस्मि । भवान् स्वकीयं कार्यं निर्विघ्नतया समापयतु । भवतः कार्यं सफलं भविष्यति'' इति उक्तवान् ।

अनन्तरं कामदेवः अदृश्यः भूत्वा पार्वती-परमेश्वरयोः निवासस्थानं कैलासमण्डपं

प्राप्तवान् ।

विघ्नेश्वरः स्वस्य भवनस्य सिंहद्वारस्य समीपे स्थितायाम् अमृतशिलायाम् उपविश्य प्रकृत्याः अवलोकनं कुर्वन् आनन्दम् अनुभवन् आसीत् । हिमालयस्य जलप्रपाताः मन्दगभीरस्वरेण सरिगमनादं कुर्वन्तः आसन् । तादृशे प्रशान्ते समये कश्चन भयङ्करः स्वरः श्रुतः - ''विघ्नेश्वरनामकः कुत्र अस्ति ?'' इति ।

अल्पे एव काले गजासुररूपधारी विघ्नः विघ्नेश्वरस्य पुरतः उपस्थितः जातः । तदा भूकम्पनम् अभवत् । गजासुरः गर्जनस्वरेण - ''अहं महागजासुरः अस्मि । भवान् गजमुखधारी चेत् अहं गजकायः अस्मि । अहं भवतः संहरणार्थम् अत्र आगतवान् अस्मि'' इति उक्तवान् ।

विघ्नेश्वरः बधिरः इव मुग्धस्वरेण - ''रे, इक्षुदण्डान् खण्डयित्वा खादितुम् इच्छामि । भवान् मम परशुं तीक्ष्णं कृत्वा यदि ददाति तर्हि भवते अहं मोदकानि दास्यामि'' इति उक्त्वा परशुं गजासुरस्य दिशि क्षिप्तवान् । एतेन गजासुरस्य पादौ कर्तितौ जातौ । पर्वतः इव अधः पतितवान् गजासुरः । तदन्तः स्थितः विघ्नः चीत्कारं कुर्वन् - ''महानुभाव ! अहं विघ्नः अस्मि । ब्रह्मणः वरस्य कारणतः एवं गजासुरस्य रूपं धृतवान् अस्मि । मया योग्यं दण्डनं प्राप्तम्'' इति उक्तवान् ।

तदा विघ्नेश्वरः शान्तस्वरेण - ''अहं विघ्नानां विनाशकः विनायकः अस्मि । भवान् गजासुररूपेण स्थितः विघ्नः अस्ति । भवतः खण्डशः कर्तनम् अनिवार्यम् अस्ति । यः मां भवन्तं च विस्मरति तं पीडयन्ति एते खण्डाः । भवान् कालियनामकः सर्पः भूत्वा कालिन्दीसरोवरे तिष्ठतु । बालकृष्णः भवतः मर्दनं करिष्यति । तस्य चरणस्पर्शेन भवतः पापपरिहारः भविष्यति । उत्तमजातीयसर्पाणां फणायाः उपरि विष्णोः चरणचिह्नानि अङ्कितानि भूत्वा शोभां वर्धयिष्यन्ति'' इति उक्त्वा परशुना विघ्नं खण्डशः कर्तितवान् । ते खण्डाः सर्वत्र पतिताः सन्तः अदृश्याः अभवन् । तदा विघ्नः अणुरूपेण अतिष्ठत् । देवाः प्रसन्नाः भूत्वा पुष्पवर्षणं कृतवन्तः ।





# परिश्रमस्य फलं सर्वदा मधुरम्

बहुप्राचीना कथा एषा । कश्चन लघुग्रामः आसीत् । तत्र कश्चन परिश्रमी कृषकः निवसति स्म । तस्य कुटुम्बं महत् आसीत् । तस्य गृहे तदीया माता, पिता, पत्नी, चत्वारः पुत्राः, अङ्गविकलः अनुजः च आसन् । गृह-सदस्याः सर्वे बहु परिश्रमं कुर्वन्ति स्म । सः कृषकः अपि गृहसदस्यान् परिश्रमं कर्तुं प्रोत्साहयति स्म । 'परिश्रमस्य फलं सर्वदा मधुरम् एव भवति' इति कृषकस्य अभिप्रायः आसीत् ।

तस्य कृषकस्य केदारस्य सीमायां कश्चन आम्रवृक्षः आसीत् । मध्याह्ने तस्य वृक्षस्य छायायाम् उपविश्य कृषकः भोजनं करोति स्म । गृहे शुभकार्यं यदा भवति तदा तस्यैव वृक्षस्य पर्णैः तोरणं क्रियते स्म । गृहस्य अलङ्करणार्थम् अपि आम्रवृक्षस्य उपयोगः भवति स्म । ऋतुकाले गृहसदस्याः सर्वे तस्य वृक्षस्य फलानि आस्वादयन्ति स्म । एवं सः वृक्षः तस्य कृषकस्य अतीव उपयोगी आसीत् ।

आम्रवृक्षे काचित् वनदेवी निवसति स्म । सा बहुभ्यः दिनेभ्यः तत्र वसति स्म । फलचयनानन्तरं यः लाभः भवति स्म तेन कृषकस्य आर्थिकस्थितिः उत्तमा भवन्ती आसीत् । तथापि सः परिश्रमं कुर्वन् भवति स्म । वनदेवी सर्वं मौनेन अवलोकमाना आसीत् ।

एकदा केदारे कार्यनिरतान् कृषकपरिवारस्य सदस्यान् अवलोक्य वनदेवी चिन्तितवती - 'दारिद्र्यावस्थायां तु सर्वे परिश्रमं कुर्वन्ति । किन्तु एतस्य आर्थिकस्थितिः उत्तमा अभवत् । तथापि एषः विश्रान्तिं न अपेक्षते । सुखानुभवस्य विचारः एव एतस्य मनसि न प्रविशति इति भाति । किम् एतस्य मनसि अधिकधनसम्पादनस्य इच्छा उत्पन्ना स्यात् ?' इति ।

गच्छता कालेन कृषकः परिश्रमस्य धनेन अपरं केदारं क्रीतवान् । वनदेवी कृषकस्य व्यवहारं दृष्ट्वा पूर्वमेव ऊहितवती आसीत् यत्



कृषकः एवम् एव कुर्यात् इति ।

यदा प्रथमा वृष्टिः आगता तदा कृषकः नूतने केदारे कर्षणम् आरब्धवान् । कृषकस्य परिश्रमं दृष्ट्वा वनदेवी सन्तुष्टा अभवत् । तस्याः मनसि कृषकस्य विषये दया उत्पन्ना ।

सायङ्काले यदा कृषकः गृहं प्रति प्रस्थितवान् तदा वनदेवी प्रत्यक्षा भूत्वा स्वस्य परिचयम् उक्तवती । अनन्तरं तम् उद्दिश्य - ''बहुभ्यः वर्षेभ्यः पश्यन्ती अस्मि । भवान् नितरां परिश्रमं करोति । वृष्टिम् आतपं च अविगणय्य कार्यं कुर्वन् भवति । भवतः कष्टं दृष्ट्वा मयि दया उत्पन्ना अस्ति । भवते कियत् धनम् आवश्यकम् इति वदतु । अहं ददामि । कष्टकरणं परित्यजतु । कार्यार्थं कर्मकरान् योजयतु'' इति अवदत् सा ।

तदा कृषकः वनदेवीं प्रणम्य पृष्टवान् - ''यदि भवती मम कष्टानि द्रष्टुं न शक्नोति तर्हि कर्मकराणां कष्टानि कथं द्रक्ष्यति ? अहमिव तेऽपि मनुष्याः खलु ?'' इति ।

कृषकस्य प्रश्नेन देवी असन्तुष्टा न अभवत् । सा पुनः पृष्टवती - ''ते सर्वे उदरभरणार्थं परिश्रमं कुर्वन्ति । अनिवार्यम् इत्यतः परिश्रमं कुर्वन्ति । किन्तु भवान् कष्टेषु एव सुखम् अन्विष्यन् जीवति । अतः एव अहं भवतः विषये सन्तुष्टा अस्मि । वदतु, कियत् धनम् आवश्यकम् ?'' इति ।

कृषकः पुनश्च वनदेवीं प्रणम्य - ''अहं परिश्रमं करोमि । कष्टम् अनुभवामि । अतः भवती मम विषये प्रसन्ना अस्ति । प्रसन्नतायाः स्थाने धनं दत्त्वा भवती व्यवहारं समापयितुम् इच्छति किम् ? भवती मम विषये सन्तुष्टा अस्ति खलु । भवत्याः सन्तुष्टिः एव मम महती सम्पत् । अहं धनं न अपेक्षे, भवत्याः कृपादृष्टिम् अपेक्षे'' इति उक्त्वा ततः निर्गतवान् ।

दिनद्वयानन्तरं यदा सः कृषकः क्षेत्रे कर्षणं कुर्वन् आसीत् तदा केनचित् वस्तुना सह हलस्य घट्टनेन कश्चन शब्दः आगतः । सः तत्र खननं कृतवान् । तत्र कश्चन पित्तलस्य घटः आसीत् । सः घटः सुवर्णस्य रजतस्य च नाणकैः पूर्णः आसीत् ।

कृषकः घटं स्कन्धे आरोप्य आम्रवृक्षस्य समीपं गतवान् । तत्र वनदेवीम् द्वित्रवारं - ''मातः, देवि'' इति आहूतवान् ।

अपरस्मिन् क्षणे एव देवी प्रत्यक्षा भूत्वा

पृष्टवती – ''भवान् किमर्थं माम् आहूतवान् ? वदतु, कः विषयः ?'' इति ।

कृषकः घटे विद्यमानां सम्पदं प्रदर्शयन् – ''एतत् कार्यं भवत्या एव कृतं खलु ?'' इति पृष्टवान् ।

तदा वनदेवी – ''किं वदन् अस्ति भवान् ? अहं तु किमपि न जानामि'' इति उक्तवती ।

कृषकः मन्दहासपूर्वकं – ''बहुभ्यः वर्षेभ्यः क्षेत्रे कृषिकार्यं कुर्वन् अस्मि । क्षेत्रे कस्मिन् कोणे किम् अस्ति इति सम्यक् जानामि अहम् । मया कष्टं न अनुभोक्तव्यम् इति खलु भवत्या अपेक्षा ? तर्हि कर्मकराणां द्वारा कार्यं कारयिष्यामि । भवतु किम् ?'' इति उक्त्वा घटं स्वीकृत्य ततः निर्गतवान् ।

परेद्यवि कृषकेण सह दश कर्मकराः अपि आगताः । कर्मकरान् दृष्ट्वा वनदेवी सन्तुष्टा अभवत् । किन्तु तस्याः आनन्दः अधिककालं यावत् न अतिष्ठत् । कार्यं कर्तुं ये कर्मकराः आगताः आसन् तेषु द्वौ एव कार्यकरणे समर्थौ आस्ताम् । इतरे वृद्धाः, विकलाङ्गाः वा आसन् ।

कृषकः प्रत्येकं जनं कार्यं सूचितवान् । सः अपि तैः सह कार्यं करोति स्म । मध्याह्ने कृषकस्य पत्नी भोजनम् आनीतवती । सर्वे मिलित्वा वृक्षच्छायायाम् उपविश्य भोजनं कृतवन्तः । अनन्तरम् अर्धघण्टां यावत् उपविश्य कष्टसुखानि परस्परम् उक्तवन्तः । तेषां जीवनविषयं श्रुत्वा कृषकः उचिताः सूचनाः दत्तवान् – ''एकं विषयं सम्यक् स्मरन्तु भवन्तः । भगवान् मनुष्यस्य सृष्टिं विनाकारणं न कृतवान् । यावच्छक्यं परिश्रमं कृत्वा सुखम्



अनुभवन्तु इति उद्देशेन कृतवान् अस्ति । अतः यावज्जीवं परिश्रमः करणीयः अस्माभिः'' इति ।

सूर्यास्ततः पूर्वं कर्मकराः कार्यं स्थगितवन्तः । कृषकः समीपस्थं कुटीरं गतवान् । वनदेवी अपि कृषकम् अनुसृतवती । कृषकः पित्तलस्य घटात् रजतनाणकानि स्वीकृत्य कर्मकराणां कृते योग्यं वेतनं दत्तवान् । वनदेवी मनसि चिन्तयन्ती आसीत् – 'धनदानविषये तु कृषकः कृपणतां न प्रदर्शितवान् । किन्तु किमर्थम् एतादृशान् पङ्गून् कार्ये योजितवान् इति न ज्ञायते' इति ।

कर्मकराणां गमनानन्तरं कृषकः वनदेवीम् उद्दिश्य – ''दृष्टवती खलु । भवत्याः आदेशानुसारं क्षेत्रे कार्यं कर्तुं कर्मकरान्

आनीतवान् अस्मि । तान् कार्ये नियोजितवान् अस्मि । इदानीं भवती प्रसन्ना स्यात् खलु'' इति उक्तवान् ।

तदा वनदेवी - ''प्रसन्नता ? कथं वा मम प्रसन्नता स्यात् ? भवान् तु एकं क्षणमपि न उपविष्टवान् । एतादृशानां कर्मकराणां योजनेन कः लाभः ?'' इति पृष्टवती ।

तत् श्रुत्वा कृषकः हसन् - ''भवत्याः प्रश्नः सम्यक् अस्ति । अद्य मम क्षेत्रे कार्यं कर्तुम् आगताः कर्मकराः विकलाङ्गाः वृद्धाः वा सन्ति । अतः तान् केऽपि कार्ये न योजयन्ति स्म । अतः अहं तान् कार्ये योजितवान् । भवत्या दत्तेन धनेन तेभ्यः उचितां भृतिं दत्तवान् । इदानीं भवती वदतु । भवती प्रसन्ना अस्ति खलु ?'' इति पृष्टवान् ।

तदा वनदेवी - ''भवतः वचनं श्रुत्वा अहं सन्तृप्ता अभवम् । यतः देवतासु मादृश्यः जडस्वरूपाः, मनुष्येषु भवादृशाः देवतास्वरूपाः च भवन्ति इति ज्ञातवत्याः मम महान् आनन्दः अभवत् । भवान् एवमेव तिष्ठतु । उत्तमानि कार्याणि कुर्वन् भवतु । भवते यावत् धनम् अपेक्षितं तावत् अहं दास्यामि'' इति उक्तवती ।

देव्याः वचनं श्रुत्वा कृषकः साञ्जलिः - ''मातः, एवं न करोतु । परिश्रमं विना अनायासेन प्राप्तं धनं पापपूर्णं भवति । मया यत् नूतनं क्षेत्रं क्रीतम् अस्ति तत्र यदि उत्तमफलचयः भविष्यति तर्हि कर्मकरेभ्यः अहम् एव भृतिं दातुं शक्ष्यामि । तदपि मम परिश्रमस्य फलेन । तदा कर्मकराः मया सह परिश्रमं करिष्यन्ति । अनन्तरम् अहं नूतनं क्षेत्रं क्रेष्यामि । भवती वृक्षे उपविश्य आशीर्वादं कुर्वती भवतु । ततोऽप्यधिकं नापेक्षे अहम्'' इति उक्तवान् ।

देवी अवधानपूर्वकं कृषकस्य वचनं शृण्वती आसीत् । कृषकस्य मुखे व्याप्तम् आत्मविश्वासं स्वाभिमानं च दृष्ट्वा नितरां सन्तुष्टा अभवत् सा ।

''भवतु परिश्रमिन्, यः परिश्रमं करोति सः इहलोके परलोके च सुखम् अनुभविष्यति'' इति आशीर्वादवचनानि उक्त्वा वनदेवी ततः अदृश्या अभवत् ।





# भजरङ्गस्य पौरुषम्

भजरङ्गः बलरामपुरस्य निवासी । एकदा तेन महान् कोपः प्राप्तः । कोपेन तस्य मुखं रक्तवर्णं जातम् । सः खड्गम् आनीय खड्गधारां तीक्ष्णां कर्तुम् उद्युक्तः ।

पूर्वस्मिन् दिने वीरबाहुनामकेन सह कश्चन विवादः प्रवृत्तः आसीत् क्षेत्रविषये । वस्तुतः विषयः न तावद्गम्भीरः । किन्तु पश्यतः एव विवादः तीव्रस्वरूपोपेतः अभवत् । अन्ते सः विवादः कलहरूपेण परिवृत्तः । तदा भजरङ्गः क्रोधयुक्तः सन् अवदत् – ''भोः, वीरबाहो ! मम खड्गं भवतः उदरं न विदारयति चेत् मम नाम भजरङ्गः एव न । जानातु अहं अस्मिन् विषये भीमसदृशः अस्मि'' इति ।

भजरङ्गः खड्गधारां तीक्ष्णीकुर्वन् एव वीरबाहुं प्रति निन्दावचनानि अपि वदन् आसीत् । एषा वार्ता ग्रामे सर्वत्र प्रसृता । जनाः एतत् द्रष्टुं तस्य गृहस्य पुरतः सम्मिलिताः । ग्रामस्य द्वित्राः ज्येष्ठाः आगत्य भजरङ्गम् उक्तवन्तः – ''भवतोः उभयोः अपि क्षेत्रे एकत्र एव स्तः । द्वयोरपि यदाकदाचिदपि सहायतायाः आवश्यकता भवेत् एव । अतः उभयोः मध्ये एतादृशी वैरभावना न उचिता । भवान् क्रोधं विस्मरतु'' इति ।

किन्तु भजरङ्गः तेषां वचनम् अशृण्वन् खड्गं स्वीकृत्य वीरबाहोः गृहं प्रति प्रस्थितः । बालाः उत्सुकाः सन्तः किं प्रवर्तते इति द्रष्टुं तमेव अनुसृतवन्तः । यदा भजरङ्गः वीरबाहुगृहं गतः तदा ज्ञातं यत् वीरबाहुः गृहे नास्ति, क्षेत्रे एव अस्ति इति । भजरङ्गः वेगेन खड्गं भ्रामयन् वीरबाहुं निन्दन् एव क्षेत्रं प्रति प्रस्थितः । तावति काले ग्रामस्य जनाः तत्र सम्मिलिताः आसन् ।

वीरबाहुस्तु क्षेत्रे एव उपविश्य दन्तमार्जनं कुर्वन् आसीत् । तेन खड्गं स्वीकृत्य अस्यामेव दिशि आगच्छन् भजरङ्गः दृष्टः । किन्तु सः किञ्चिदपि न भीतः । आगच्छन्तं भजरङ्गम्

एकवारं दृष्ट्वा मुखं परावृत्य स्वकर्मणि मग्नः अभवत् ।

भजरङ्गः वेगेन पदं स्थापयन्, खड्गं च आकाशे भ्रामयन् वीरबाहुसमीपम् आगत्य उच्चस्वरेण आक्रोशत् – "भोः, भवता अहं समीचीनतया न ज्ञातः । इदानीम् एतं खड्गम् सम्यक् पश्यतु । इदमिदानीम् अस्य खड्गस्य धारां तीक्ष्णां कृत्वा आनीतवान् अस्मि । एषः खड्गः भवतः उदरं विदार्य भवतः शरीरं छिन्नं करोति" इति वदन् एव सः खड्गम् उन्नीतवान् ।

जनैः चिन्तितं यत् भजरङ्गः केवलं भाययन् नास्ति, निश्चयेन वीरबाहुं मारयेत् इति । अतः ते भजरङ्गं गृहीत्वा ततः दूरम् आनीतवन्तः ।

एवं सर्वं प्रवृत्तं चेदपि वीरबाहुः किञ्चिदपि न विचलितः । पूर्वं यथा उपविष्टः तथैव आसीत् इदानीमपि । एषा घटना तस्मिन् कमपि प्रभावं न अजनयत् । सः भजरङ्गं कटाक्षेणापि न दृष्टवान् एव । तदा श्यामः नाम कश्चन वीरबाहुसमीपम् आगत्य उक्तवान् – "भवान् अत्र किं कुर्वन् अस्ति ? सः भजरङ्गः खड्गम् आकृष्य भवन्तं हन्तुम् आगतः । किन्तु भवान् तूष्णीम् उपविष्टः अस्ति निश्चिन्ततया । भवान् तं न दृष्टवान् अपि । अहो ! कियत् धैर्यं भवतः ! भवतः धैर्यं प्रशंसायोग्यम्" इति ।

तस्मिन्नेव समये जनानाम् अवरोधनं निवारयन् भजरङ्गः – "मां त्यजन्तु । वीरबाहोः जीवनस्य अन्तिमं दिनम् एतत् । तम् अहं चूर्णीकरोमि" इति उक्तवान् ।

तादृशं जनानाम् अवरोधनं निवारयन्तं



भजरङ्गं दृष्ट्वा वीरबाहुः श्यामम् उक्तवान् - ''श्याम ! इदानीम् अहम् एकं दृश्यं दर्शयामि, पश्यतु । भवान् तत्र गत्वा ये तं भजरङ्गम् अवरुद्धवन्तः तान् वदतु 'तं त्यजन्तु' इति ।''

श्यामः न ज्ञातवान् यत् वीरबाहुः किमर्थं भजरङ्गं मोचयितुम् उक्तवान् इति । भजरङ्गः तु उच्चैः रटन् अस्ति, निन्दन् अस्ति, मारयामि इति भाययन् अपि अस्ति । तावदेव न, तस्य हस्ते खड्गोऽपि विराजते । 'वीरबाहोः जीवने निरुत्सुकता उत्पन्ना किम् ? कीदृशं धैर्यं स्यात् एतस्य?' इति चिन्तयन् एव श्यामः जनानां समीपं गत्वा कञ्चन आहूय उक्तवान् - 'भजरङ्गं मुञ्चतु' इति ।

एतद्वाक्यसमनन्तरमेव जनाः गृहीतं तं भजरङ्गं त्यक्तवन्तः । अनिरीक्षितरूपेण घटितया एतया घटनया चकितः भजरङ्गः भूमौ पतितः । ततः उत्थाय खड्गं प्रदर्शयन् सः वीरबाहुदिशि धावितवान् ।

किन्तु शीघ्रमेव सः ज्ञातवान् यत् मां निवारयितुं कोऽपि नागतः इति । अतः सः तत्रैव तिष्ठन् वीरबाहुम् उद्दिश्य -''भोः, वीरबाहो ! भवतः आयुः न समाप्तमिति मन्ये । अत एव अद्य भवान् श्वसिति । एतेषां सर्वेषां पुरतः भवन्तं हत्वा अहं कारागृहवासम् अनुभोक्तुं न इच्छामि । एतादृशी मूर्खता न क्रियते मया । अद्य मास्तु, किन्तु अग्रे कस्मिंश्चित् दिने भवन्तम् अवश्यं मारयिष्यामि एव । तद्दिने मत्तः भवन्तं कोऽपि न निवारयिष्यति । मम हस्तेन एव भवतः प्राणाः गच्छेयुः इति विधिलिखितम्'' इत्येवं वदन् ततः शीघ्रं प्रस्थितवान् एव ।

तस्य गमनानन्तरं वीरबाहुः पुरतः स्थितान् जनान् अवदत् - ''भवन्तः दृष्टवन्तः किल ? भवद्भ्यः मुक्तिं प्राप्य सः कथं व्यवहृतवान् इति ? तेन एवं चिन्तितं यत् मारणप्रयत्नात् भवन्तः निवारयेयुः इति । खड्गप्रदर्शनमात्रेण मां भाययितुं सः इष्टवान् । मारयितुं यः आगच्छति सः स्वेन सह जनसमूहमेव किमर्थम् आनयेत् ? भषन् श्वा न दशति । दशन् श्वा न भषति । एषा लोकोक्तिः एतादृशं दृष्ट्वा एव कृता स्यात्'' इति ।

तस्य वचनेन जनाः ज्ञातवन्तः यत् वीरबाहोः धैर्यस्य मौनस्थितेः च कारणं किम् इति ।



# मम पिता अट्टे नास्ति



दक्षिणसमुद्रस्य तटे कश्यपनामकः कश्चन वणिक् आसीत् । तस्य एकः पुत्रः, पत्नी च आस्ताम् । तस्य पुत्रस्य वयः त्रीणि वर्षाणि । बालः सः मधुरभाषी सुन्दरश्च । अतः पितुः सः अतीव प्रियः आसीत् । गृहं प्रति आगन्तॄणां बान्धवानां मित्राणां च पुरतः सः स्वपुत्रम् आनाय्य तेन सह सम्भाषणं कुर्वन् तस्य बालालापम् अन्यान् अपि श्रावयन् महान्तं सन्तोषम् अनुभवति स्म ।

सः कश्यपः कार्पासं तस्य बीजानि च क्रीत्वा योग्यसमये तस्य विक्रयणं करोति स्म । कदाचित् सः अन्यवणिक्तः ज्ञातवान् यत् पार्श्वस्थे नगरे न्यूनमूल्येन कार्पासस्य विक्रयणं प्रचलति इति । किन्तु तस्य समीपे अधिकं कार्पासं क्रेतुं धनं न आसीत् । अतः सः कञ्चन धनिकम् ऋणं प्रष्टुं गतः । मासत्रयाभ्यन्तरे ऋणस्य प्रत्यर्पणं करिष्यामि इति वचनं दत्त्वा तस्मात् धनिकात् पञ्चशतं रूप्यकाणि आनीय तेन धनेन कार्पासः क्रीतः तेन । "अहम् इदानीमेव अस्य कार्पासस्य विक्रयणं न करोमि । मूल्यं यदा वर्धिष्यते तदा अस्य विक्रयणं कृत्वा अधिकं लाभं प्राप्स्यामि । तदनन्तरम् अस्माकं जीवनं सर्वदा सुखमयमेव" इति पत्नीं गर्वेण उक्तवान् सः ।

अनन्तरदिने सः नगरं गत्वा बृहत् एकं भाण्डागारं क्रीत्वा आनीतवान् । तस्मिन् भाण्डागारे कार्पासं संरक्षितवान् च ।

मासः अतीतः । आकाशः मेघेन आवृतः । वृष्टिः आरब्धा । शनैः आरब्धः वायुः क्षणात् झञ्झावातरूपेण परिवृत्तः । अनेन झञ्झावातेन महान्तः वृक्षाः अपि उत्पाटिताः । कश्यपस्य कार्पासः अपि सम्पूर्णतया आर्द्रः अभवत् ।

स्वस्य कार्पसस्य दुरवस्थां पश्यतः कश्यपस्य शिरोभ्रमणम् अभवत् । सः भ्रान्तचित्तः इव ततः इतः सञ्चरन् विलपनम् आरब्धवान् – 'इदानीं मया किं करणीयम् ? भाण्डागारस्य भाटकं दातव्यम् ! धनिकात् स्वीकृतं धनं, तस्य कुसीदः च प्रात्यर्पणीयम् । यद्येवं न क्रियेत तर्हि कष्टं सम्मुखीकरणीयं भविष्यति' इति ।

पत्युः एतां परिस्थितिं पश्यन्ती तस्य पत्नी काञ्चन सूचनां दातुम् इच्छन्ती अवदत् – "इदानीं भवता एवं क्रियताम् । यावत् एतावत् धनसङ्ग्रहणं न भवति तावत् भवान् ग्रामान्तरं गच्छतु । यदि भवान् इच्छति तर्हि अस्माकं बन्धुगृहं गच्छतु । तत्रैव कानिचन दिनानि वसतु । यदा धनिकः आगमिष्यति तदा सः अस्मान् निन्देत् यत् भवता बुद्धया पलायनं कृतम् इति । सः निन्दतु नाम । भवान् तु तत्र वसन् बन्धुभ्यः ऋणं प्राप्तुं प्रयासं करोतु । अस्माकं स्थितिं दृष्ट्वा बान्धवाः कदाचित् ऋणं दद्युः अपि" इति ।



"भवत्या युक्तम् उक्तम् । द्वित्रेषु मासेषु प्रत्यर्पयिष्यामि इति उक्त्वा ततः एव धनमपि आनेतुं शक्नुयाम् । अस्याः परिस्थित्याः एकवारं विमोचनं प्रथमं भवतु । अद्य एव अहं गच्छामि" इति कश्यपेन उक्तम् ।

परेद्यवि एव प्रस्थितः सः गमनात् पूर्वं पुत्रम् उक्तवान् – "वत्स ! बन्धुगृहं प्रति अहं गच्छामि । ततः प्रत्यागमनसमये भवते अनेकानि क्रीडनकानि आनेष्यामि" इति ।

पूर्ववचनानुसारं त्रिषु मासेषु गतेषु धनिकः कश्यपस्य गृहम् आगतवान् । तदा कश्यपस्य पत्नी – "आर्यपुत्रः बन्धुगृहं गतवान् अस्ति । सप्ताहानन्तरम् आगमिष्यति" इति उक्तवती ।

तदा तत्रैव मातुः अञ्चलं गृहीत्वा स्थितः कश्यपस्य पुत्रोऽपि – "आम्, मम पिता प्रत्यागमनसमये क्रीडनकानि आनेष्यामि इत्यपि उक्तवान् अस्ति" इति उक्तवान् । सः धनिकः तं बालं दृष्ट्वा हसन् कश्यपस्य पत्नीं – "सप्ताहानन्तरं पुनः आगमिष्यामि" इति वदन् ततः निर्गतः ।

सप्ताहस्य अनन्तरम् आगतः सः पुनः पूर्वतनम् एव उत्तरं श्रुत्वा कुपितः सन् – "सप्ताहानन्तरं यथाकथञ्चित् मम धनं प्रत्यर्पणीयम् एव" इति उक्त्वा प्रतिनिवृत्तः ।

किन्तु सप्ताहानन्तरं पुनः यदा सः आगतः तदापि पूर्वतनम् एव उत्तरम् आगतम् । तेन बहुधा व्यग्रः सः उच्चस्वरेण – "दिनत्रयाभ्यन्तरे कुसीदेन सह मम ऋणं न प्रत्यर्पितं चेत् मया दण्डहस्ताः सेवकाः प्रेषयिष्यन्ते । ते धनं प्रतिप्राप्य एव प्रतिगमिष्यन्ति" इति ।

तस्मिन् दिने एव रात्रौ कश्यपः गुप्ततया गृहम् आगतः । पत्न्या धनसङ्ग्रहणविषये पृष्टः सः – "व्यवस्था काऽपि न अभवत्" इति उक्तवान् । तस्य उत्तरेण कुपिता पत्नी – "भवान् यत्किमपि करोतु । किन्तु एतत् स्मरतु यत् दिनत्रयानन्तरं सः धनिकः स्वस्य अनुयायिभिः

सह आगमिष्यति ऋणं प्रतिस्वीकर्तुम्'' इति अवदत् ।

कश्यपः एतस्मात् सङ्कटात् विमोचनं प्राप्तुं कमपि उपायं चिन्तितवान् । किन्तु धनिकस्य विषये सन्देहः आसीत् एव तस्य । 'धनिकः यदाकदाचिदपि आगच्छेत्' इति सः जानाति स्म ।

तेन यथा चिन्तितं तथैव अभवत् । परेद्यवि प्रातःकाले एव धनिकपक्षीयाः आगत्य द्वारताडनं कृतवन्तः । 'आगताः एते धनं प्राप्तुं येनकेनापि प्रकारेण निःसङ्कोचं व्यवहरेयुः । ताडनादिकम् अपि कुर्युः ते' इति कश्यपः अचिन्तयत् ।

अतः सः झटिति एव कमपि उपायं विचिन्त्य - ''अहं अट्टस्य उपरि निलीय उपविशामि । भवती आगतान् केनापि व्याजेन प्रेषयतु'' इति पत्नीम् उक्त्वा अट्टे निलीय स्थितवान् ।

कश्यपस्य पुत्रः एतत् सर्वं पश्यन् आसीत् । धनिकपक्षीयाः द्वारताडनेन श्रान्ताः । ते इतोऽपि दृढतया ताडनम् आरब्धवन्तः ।

कश्यपस्य पत्नी द्वारम् उद्घाट्य तान् पश्यन्ती - ''के भवन्तः ? किमर्थम् एवं द्वारं निरन्तरं ताडयन्तः सन्ति ?'' इति कोपेन एव पृष्टवती ।

''वयं के इति पृच्छन्ती अस्ति खलु भवती ? पतिम् आह्वयतु । सः वदेत्'' इति आगतेषु कश्चन व्यङ्ग्यस्वरेण उक्तवान् ।

''पतिः गृहे नास्ति '' इति कश्यपस्य पत्नी मन्दस्वरेण अवदत् ।

तस्याः वचने विश्वासम् अकुर्वन्तः धनिकः तत्पक्षीयाः च अन्तः आगत्य कश्यपम् अन्वेष्टुम् उद्युक्ताः । कश्यपस्य पुत्रोऽपि तैः सह एव आसीत् । किन्तु कुत्रापि कश्यपस्य दर्शनं नाभवत् । एतत् सर्वं दृष्ट्वा कश्यपस्य पुत्रः चिन्तितवान् यत् आगतानां पितुः च नेत्र-निमीलनक्रीडा प्रचलति इति । अतः सः पितुः साहाय्यं कर्तुम् इच्छन् झटिति एव अवदत् - ''मम पिता अट्टे नास्ति'' इति ।

धनिकः तस्यां दिशि दृष्ट्वा हसितवान् । हसन् एव तं मुग्धबालकं कपोले मृदु ताडितवान् ।

ततः सः कश्यपस्य पत्नीम् उद्दिश्य - ''आदौ पतिं वदतु - अधः अवतरतु इति । मम एतत् वचनमपि तं वदतु - धनं प्रत्यर्पयितुम् इतोऽपि मासात्मकः समयः दीयते इति'' इति वदन् गृहात् प्रस्थितः । तेन सह तत्पक्षीयाः अपि निर्गताः ।

गृहात् निर्गत्य यदा सर्वे मार्गं गताः तदा तान् दृष्ट्वा हसन् सः बालकः - ''मम पिता अट्टे नास्ति, मम पिता अट्टे नास्ति'' इति उच्चैः वदन् नृत्यम् अकरोत् ।




चन्दमामायाः प्रस्तुतिः
अजेयः गरुडः
13
चित्रं - पाणिः
राज्ञः अपहरणं जातम् अस्ति इति ज्ञात्वा चन्द्रपुरीयाः आश्चर्येण स्तब्धाः जाताः । सेनापतिः नरेन्द्रदेवः राज्ञः विषये अधिकं विवरणं प्राप्तुं तान्त्रिकेण नागबन्धुना मेलनाय पर्वत-प्रदेशं प्रति गच्छति । भवनरक्षकाः रवीन्द्रदेवस्य आज्ञायाः अनुगुणम् निवासं प्रति गच्छन्ति ।


रवीन्द्रदेवः आदित्यं पृच्छति यत् यदा रक्षकाः आगताः आसन् तदा भवान् कुत्र गतवान् आसीत् इति ।
अहं मम प्रकोष्ठे एव ध्यानं कुर्वन् आसम् । रक्षकाः मामन्वेष्टुं किमर्थम् आगताः आसन् ?
भवान् स्वप्रकोष्ठे न आसीत् इति अहं स्पष्टतया जानामि । तदस्तु, राजा कुत्र अस्ति ?


एतत् रहस्यं रक्ष्यते इति मया प्रतिज्ञातम् अस्ति । तत् मया पालनीयम् एव ।
महती मूर्खता एषा । परोक्षोद्देशस्य साधनार्थं भवता सः कुत्रापि गोपितः इति अहं जानामि । कुत्र अस्ति सः ? सः अस्माकं राजा ।

रवीन्द्रदेवः खड्गम् आकृष्य निरायुधम् आदित्यं निन्दन् वदति -

भवादृशाना निग्रहणं कथम् इति जानामि अहम् ।

आदित्यः विद्युद्गत्या परिवृत्य रक्षकहस्तात् शूलं स्ववशीकरोति ।

खड्गं क्षिपतु ।

मां न मारयतु आदित्य !

आदित्यः रवीन्द्रदेवस्य खड्गं वशीकृत्य रक्षकभटान् सम्मुखीकरोति । ते ततः पलायन्ते । आदित्यः द्वारं पिधाय कीलयति अन्तर्भागात् ।

रवीन्द्रदेवः स्तब्धः भवति । अनिरीक्षिता घटना सा । असहायः सः भीतः भवति ।

मां त्यजतु कृपया । भवान् यथा वदति तथा आचरिष्यामि ।

अस्तु, अद्य मुञ्चामि भवन्तम् । किन्तु भवतः अन्तिमदिनम् आसन्नम् अस्ति । पितरं वदतु यत् राज्ञः निवारणार्थं कृतस्य कुतन्त्रस्य समाप्तिकालः सन्निहितः इति ।

भवनरक्षकाः अवधानवन्तः भवन्ति । ते द्वारोद्घाटनार्थं प्रयत्नं कुर्वन्ति ।

रवीन्द्रदेवस्य मुखं वस्त्रेण बद्ध्वा, तं च आसन्दे बद्ध्वा..... .

आदित्यः झटिति द्वारम् उद्घाटयति । यदा भटाः अन्तः प्रविशन्ति तदा सः द्वारं कीलयित्वा पलायते राजानं द्रष्टुम् ।


पर्वतान् अतिक्रम्य गतः नरेन्द्रदेवः तदनुयायिनः च दिनद्वयस्य प्रयाणस्य अनन्तरं एकं प्राचीनं भवनं प्राप्नुवन्ति ।


नागपञ्चमीपर्वणः निमित्तम् उपायनं दातुं पङ्क्तिशः स्थितान् नागबन्धोः भक्तान् ते पश्यन्ति ।


तान्त्रिकस्य एकः शिष्यः एतेषां समीपम् आगच्छति ।
कृपया अश्वात् अवतीर्य पङ्क्तौ तिष्ठन्तु । अस्माकं गुरुः अनुशासनविषये कठोरः । तस्य आदेशः अवश्यं पालनीयः एव अत्र ।
(अनुवर्तते)

# व्याधस्य शुनकः

अरण्ये जले च स्थितानां पक्षिणां ग्रहणाय कश्चिद् व्याधः एकदा एकं शुनकम् इष्टवान् । 'सः शुनकः वृक्षस्य अधः जले वा मया पातितान् पक्षिणः आनेतुं समर्थः स्यात्' इति तस्य व्याधस्य चिन्तनम् आसीत् । अतः सः विपणिं गत्वा कञ्चन शुनकं क्रीत्वा आनीतवान् । गृहं प्रति आगमनस्य अनन्तरं तस्य मनसि विचारः आगतः यत् एषः शुनकः कियत्सामर्थ्ययुक्तः इति परीक्षणीयम् इति । अतः सः सरोवरस्य उपरि डयमानेषु एकम् अरण्यहंसं बाणप्रयोगेण अधः पातितवान् । व्रणितः सः हंसः उड्डयनं कर्तुम् असमर्थः सन् जले अपतत् । अन्ये सर्वेऽपि पक्षिणः उड्डीय गताः ।

सः व्याधः तस्मै शुनकाय तं पक्षिणं दर्शयन् आदिशत् - 'तम् आनयतु' इति । सः शुनकः झटिति धावन् गत्वा जलस्य उपरि पदानि स्थापयन् हंसं मुखेन गृहीत्वा आनीतवान् । एतत् दृष्टवतः व्याधस्य महत् आश्चर्यम् । सः अचिन्तयत् - 'अहं यदि अन्यं कमपि एतं विषयं वदेयं तर्हि सः मम वचने सर्वथा न विश्वस्येत् ! तावदेव न, माम् उन्मत्तं भावयेत् सः' इति ।

अतः तेन कश्चन उपायः चिन्तितः । अनन्तरदिने सः स्वेन सह अन्यौ व्याधौ सरारेवरस्य समीपं नीतवान् । यदा सः पूर्वदिनवत् सरोवरस्य उपरि डयमानान् अरण्यहंसान् दृष्ट्वा तान् लक्ष्यीकृत्य बाणप्रयोगं कृतवान् तदा व्रणितः कश्चन हंसः जले अपतत् । अन्ये डयमानाः ततः गताः । व्याधस्य प्रेरणया सः शुनकः जलस्य उपरि पद्भ्यां गच्छन् तं व्रणितं हंसं कण्ठे गृहीत्वा आनीतवान् ।

तेन व्याधेन सह आगतौ अन्यौ व्याधौ एतत् दृष्ट्वा उक्तवन्तौ - ''भोः, विपण्यां केनापि भवान् वञ्चितः । कीदृशः शुनकः क्रीतः भवता ? एषः शुनकः तु तरणमेव न जानाति'' इति ।





लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'मार्च्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**

**(सौ.) लोमा आचार्य -**

*१०४, गणेश अपार्ट्मेण्ट्स् (१अङ्कः)*

*पाङ्गालनगरम्, बाग्ले एस्टेट्*

*थाने(पश्चिम) - ४०० ६०४*

### पुरस्कृतशीर्षिका





प्रदर्शितं पश्य हि सर्वम्

नैव दर्शितं चैतत् सर्वम्

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED

No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

